## २.३१

अयम् एव स्पृष्ठ्यो[1] यो ऽयं पवते। एतेन हीदं सर्वं स्पृष्टम्। स्पृष्ठ्यो ह वै नामैषः[2]। तं पृष्ठ्य[3] इति परोक्षम् आचक्षते। सर्वान् कामान् स्पृशति य एवं वेद।

असाव एवाभि[4]प्लवो यो ऽसौ तपति। एष हीदं सर्वम्[5] अभि[4]प्लवते[6]।

तद् आहुर् यत् पृष्ठ्याभिप्लवाव् इत्य् आचक्षते[7] ऽभिप्लवम् उ वै पूर्वम् उपयन्ति। कथं पृष्ठ्यः पूर्व उपेतो भवतीति[8]। स ब्रूयाद् यद् एवायम्[9] अवरो वायुः पवते पर आदित्यस् तेनेति। अथो यत् परं[10] सन्तम् अभिप्लवम् अवरम्[11] उपयन्ति व्यतिषंगाया-[12] निर्मार्गाय[13] सर्वायुष्ठायै[14]।

तद् आहुर् यच् चत्वारो ऽभिप्लवस्य[15] स्तोमाष् षद् पृष्ठ्यस्य[16] कथं तत् सभारम्[17] इति। स ब्रूयाद् यद् एवैते सदृशि[18] देवते वायुश् चादित्यश् च तेन सभारम् इति। अथो यद्[19] ब्रह्माभिप्लवः क्षत्रं पृष्ठ्यस् तेनो एवेति[20] ॥ ३१ ॥

1 स्पृष्ठ्य is not found in MW, VPK and Index Védique.

2 A B C नामेश.

3 For the connection of पृष्ठ्य with √स्पृश् cf. JB III.117 (Auswahl §185) तद्दिवि स्पृष्टमतिष्ठत्। यद्दिवि स्पृष्टमतिष्ठन् तत् स्पृष्टाना स्पृष्टत्वम्। स्पृष्टा ह वै नामैतानि। तानि पृष्ठानीति परोक्षमाख्यायन्ते। सर्वान् कामान् स्पृशति य एव वेद, KB XXIV.8 पृष्ठैर्वै देवा स्वर्गं लोकमस्पृक्षन्. स्वर्गस्यैव लोकस्य स्पृष्ट्यै, GB I.4.23 सर्वैः पृष्ठैः स्वर्गं लोकमभ्यस्पृशन्त। यदभ्यस्पृशन्त तस्मात् स्पृश्य। तं वा एत स्पृश्यं सन्तं पृष्ठ्य इत्याचक्षते परोक्षेण, ŚBM XII.2.2.11 यदस्पृशंस्तस्मात् पृष्ठ्याः. Also see Adhvara-mīmāmsā-kutūhala-vṛtti on Jaiminī-sūtras p.19, line 11f.

4 C omits -प्लवो योऽसौ तपति। एष हीद सर्वमभि-.

5 B स्वर्वम्.

6 For the derivation of अभिप्लव from अभि+√प्लु cf. JB II.440 ते देवा एतमभिप्लव समभरन्। तेनाभ्यप्लवन्त। तदभिप्लवस्याभिप्लवत्वम्, ŚBM XII.2.2.10 यदभ्यप्लवन्त तस्मादभिप्लवाः, KB XXI.6 यदेवैष षडहः पुनः पुनरभिप्लवते तस्मादभिप्लवो नाम, GB I.4.23 स्वर्गं लोकमभ्यप्लवन्त। यदभ्यप्लवन्त तस्मादभिप्लव. It is derived from √प्लु at ŚBM XII.2.4.8 प्लवन्त इव वा अभिप्लवा.

7 C आचक्षत.

8 Grammatically, having a smaller number of syllables the word पृष्ठ्य precedes the word अभिप्लव. But ritually, in the first half of the gavāmayana, abhiplavas precede pṛṣṭhyas. Hence the explanation of the grammatical sequence. See Caland, Acta Orientalia, Vol. IX,p.59f. 'A Rhythmic Law in Language'.

9 C एवाधम् (ध and य are confusable in Grantha).

10 A B C पर.

11 C Wh omit अवरम्.

12 A B व्यतीषगाया-, C प्यतिपगाया-.

13 अनिर्मार्गाय is of common occurrence in the Saṃhitās. MS I.8.5, II.3.1, IV.3.6, IV.4.1, KS XII.5, 8, 13, XXIV.10, Kap XXXVIII.3. But in the other Brāhmaṇas it is quotable only from GB II.2.8. (see Miss Gaastra, p.173 note 10). It recurs in JB I.201, III.92.

14 C सर्वाय्यिष्टायै. सर्वायुष्टायै recurs in JB I.335. It is unquotable from elsewhere. सर्वायुष् is met with.

15 C हिप्लवस्य. The four stomas of the abhiplava-ṣadaha are trivṛt, pañcadaśa, saptadaśa and ekaviṃśa (see ŚBM XII.2.2.12).

16 The six stomas of the pṛṣṭhya-ṣaḍaha are the trivṛt, saptadaśa, ekaviṁśa, triṇava and trayastriṁśa.

17 सभार is not found in MW, VPK and Index Védique. Cf. सभारतायै in KB IV.1, XVIII.11, XIX.8 and ŚBK I.2.1.10. Caland (ŚBK introd., III §15, p.55) translates सभारता as 'the having-the-same-weight'.

18 So all MSS. The dual of सदृश fem. is सदृश्यौ (Auswahl §174), the dual of सदृश is सदृशौ.

19 A B C यद्.

20 Supply सभारम् to complete the sense.

## २.३२

तद्[1] आहुर् यद् एते पृष्ठ्यस्य विषमा[2] स्तोमास् त्रिवृत् पञ्चद[श]स् [3]सप्तदश एकविंशास्[3] त्रिणवस् त्रयस्त्रिंश[4] इति, कथम् एतत् समात् समम् उपेतं भवतीति। स ब्रूयाद्[5] ब्रह्म वै त्रिवृत्[6]। क्षत्रं पञ्चदशः[7]। ब्रह्म वै क्षत्रा[ज्] ज्यायः[8]। तेन समात् समम् उपेतं भवति[9]। विद्[10] सप्तदशः[11]। क्षत्रम् उ वै विशो ज्यायः। तेन समात्[12] समम् उपेतं भवति। एकविंशं[13] स्तोमम् अनु शूद्रः[14]। वैश्यो वै [15]शूद्राज् ज्यायान्। तेन[15] समात् समम् उपेतं भवति। त्रिणवं स्तोमम् अनु ग्राम्याः पशवः। शूद्रो वै ग्राम्येभ्यः पशुभ्य श्रेयान्। अत्ता[16] हि स तेषाम्[17]। तेन समात् समम् उपेतं भवति[18]। त्रयस्त्रिंशं[19] स्तोमम् अन्व् आरण्याः पशवः। ग्राम्या वै पशव आरण्येभ्यः पशुभ्य श्रेयांसः। बिभ्यत इतरे[20] चरन्त्य् अधिगन्तेतरेषां हन्ता। तेन समात् समम् उपेतं भवति।

तद् आहुः कस्माद् [21]एकरूपो ऽभिप्लवो[21] द्विरूपः पृष्ठ्यस् समान[22] एव सन् व्यूढश् च समूढश् चेति। स [23]ब्रूयाद् यस्माद्[23] इदं ब्रह्म ब्रह्मैव[24]। अथ यस्माद् उ क्षत्रियस् सन् ब्राह्मणो भवति तस्माद् एकरूपो[25] ऽभिप्लवो द्विरूपः पृष्ठ्य इति[26]।

तद्[27] धैतद् एके ऽभिप्लवस्य षष्ठम् अहर् उक्थ्यं[28] कुर्वन्त्य् एवं सभारम् इति। तद् उ होवाच शाट्यायनिर् मोहयन्ति[29] त ऽभिप्लवं ये तथा कुर्वन्ति। अब्रह्म तर्हि[30] भवति। तस्मात् तथा न कार्यम् इति।

अथ हैके पृष्ठ्यस्य षष्ठाद् अह्नो द्विपद[31] उद्धरन्त्य् एवं सभारम् इति। तद् उ होवाच शाट्यायनि[32] स्वर्ग एष लोको यत् पृष्ठ्यष् षडहः[33]। यजमान एष निदानेन[34] यद् द्विपदः। तम् आयतनाच् च्यावयन्ति। स य एनांस् तथा चकुषो[35] ब्रूयाद् आयतनाद् वा च्योष्यन्ते ऽस्माद् वा लोकाद्[36] इति, तथा हैव स्युः[37]। तस्मात्[38] तथा न कार्यम् इति ॥ ३२ ॥

1 A B C ताद्.

2 All the stomas of the pṛṣṭhya-ṣaḍaha are odd numbers: trivṛt 9, pañcadaśa 15, saptadaśa 17, ekaviṁśa 21, triṇava 27, trayastriṁśa 33.

3 B सप्तदशैकविंशस्.

4 A B C त्रयत्रिंश.

5 A B C ब्रूयात्.

6 A B C त्रवृत्. The nine-versed stoma is priesthood (cf. Caland, PB XIX.

17.3) because both of them are sprung from the mouth of Prajāpati (PB VI.1.6 and JB I.68). Also cf. Sāyana on PB II. 17.4 योऽयं त्रिवृत्स्तोम ब्रह्म वै ब्राह्मणजातिः खलु उभयोः प्रजापतिमुखजन्यत्वात्.

7 The pañcadaśa stoma is the nobility (क्षत्रम्) because both of them were created by Prajāpati from his breast and arms (PB VI.1.8 and JB I.68). Cf. Sāyana on PB XIX.17.3 पञ्चदशस्तोमस्य क्षत्रियस्य प्रजापतिबाहुजन्यत्वसाम्यादेकत्वोपचारः.

8 Cf. PB XI.1.2 ब्रह्म हि पूर्वं क्षत्रात्.

9 C inserts विट् सप्तदशः क्षत्रमु वो विशो ज्यायस्तेन समात् सममुपेत भवतीति स ब्रूयात् after भवति.

10 B विराट्.

11 The saptadaśa stoma is the विट्, because both were born from the middle, the belly, of Prajāpati (JB I.69).

12 C समत्.

13 B एकविंश.

14 Here uniformity is broken by not identifying एकविंश स्तोम with शूद्र whereas at JB I.69 and PB VI.1.11 both of them are said to be born from Prajāpati's feet. AB VIII.4 actually says शौद्रो वर्ण एकविंश. The śūdra has been said to come after the ekaviṃśa stoma because he comes after the kṣatriyas and vaiśyas who are identified with the ekaviṃśa stoma in PB II. 16.4 क्षत्रमेकविंशः, TB I.8.8.5 विड् वा एकविंशः.

15 B शूद्राज्यायांस्तन, C शूद्राज्यायास्तन.

16 A अन्तात्ता, C अन्तानन्ता.

17 Cf. JB I.252 चत्वारोऽस्तारण्वडाधा । ब्राह्मणश्च राजन्यश्च वैश्यश्च शूद्रश्चैतेऽस्तारः, गौश्चाश्वश्चाजाश्चाविश्च व्रीहिश्च यवश्चैत आधा

18 C inserts तदाहुः कस्मादेकरूपोभिप्लवे द्विरूप' पृष्ठ्यस्सामान एव सन् व्यूढश्च समूढश्चेति स ब्रूयादस्मादिद.

19 A B C त्रयस्त्रिंश.

20 इतरे 'latter'.

21 A एकरूपाभिप्लवो, C एकरूपाभिप्लव.

22 C सामान.

23 A ब्रयद्यस्माद्, B ब्रूयदस्माद्, C बूयदस्माद्.

24 B ब्रह्मेव.

25 A C एकरूपा.

26 C इते.

27 C omits त-.

28 Usually the sixth day of the abhiplava-ṣaḍaha is an agniṣṭoma.

29 B C मेहयन्ति. मोहयन्ति 'they disorder' (Eggeling, ŚBM IV.1.2.19 and XI. 5.5.13).

30 A B C तर्हि.

31 B द्विवद.

32 C repeats मेहयन्ति तेभिप्लव ये तथा कुर्वन्त्यब्रह्म तर्हि भवति तस्मात्तथा न कार्यमित्यथ हैके पृष्ठ्यास्य षष्ठादह्नो द्विपद उद्धरन्त्येव सभारमिति तदु होवाच शाट्यायनि.

33 Cf. PB XVI.15.6 स्वर्गो लोकः पृष्ठानि.

34 A B C निदादेन.

35 C चक्रषो.

36 A B C ल्लोकाद्.

37 Cf. JB I.335 स य एनांस्तथा चक्रुषो ऽनुव्याहरेदिति वेति वा भविष्यन्तीति तथा हैव स्युः, JB II.37 स य एनांस् तथा चक्रुषो ब्रूयादायतनाद्वा च्योष्यन्ते ऽस्माद्वा लोकादिति तथा हैव स्यु. । तस्माद् यथैवेतरेषामह्नां तथा कार्यम् . स य एनांस्तथा चक्रुषो ब्रूयात् प्राणापानाबुदखास्युर्मरिष्यन्तीति तथा हैव स्यु.

38 A B C त्तस्मात्.

## २.३३

तद् आहुर् यद् इदं प्रायणीयम् अहस् त्रिवृद् आचक्षते, प्रायणीयम् इत्य् अदश् चतुर्विंशं', कथम् एतत् त्रिवृता प्रयतं भवतीति । स ब्रूयाद् यद् एवैते चत्वारिंशत्

त्रिवृतस् संपद्यन्ते तेन त्रिवृता प्रयतं भवतीति । अथो यच् चतुर्विंशत्यक्षरा गायत्री तेनो एवेति[2] ।

तद् आहुः कथम् [3]एतद् वैषुवतीयम् अहश् छन्दोम्यं[3] भवतीति । स ब्रूयाद् यावन्ति सप्तानां चतुरुत्तराणां[4] छन्दसाम् अक्षराणि तावत्य् एतस्याह्नः स्तोत्रियाः । तेन[5] छन्दोम्यं भवतीति ।

तद् आहुर् यद् उपरिष्टाद्[6] विषुवतश् छन्दोमान्[7] उपयन्ति कथं पुरस्ताद् विषुवतश् छन्दोमा उपेता भवन्तीति । स ब्रूयाद् य एवैष आरम्भणीयस्याह्नश्[8] चतुर्विंश[श्] छान्दोमिकस्तोमस् तेन[9] पुरस्ताद् विषुवतश्[10] छन्दोमा उपेता भवन्तीति । अथो यद् एव पृष्ठ्यस्य द्वे द्वे अहनी समस्ते छन्दोमास्[11] संपद्यन्ते तेनो[12] एवेति ॥ ३३ ॥

1 All the stotras of the prāyaṇīya atirātra are 24-versed (PB IV.2.4).

2 To complete the sense add प्रयत भवति after एव Cf. PB IV.2 5 चतुर्विंशत्यक्षरा गायत्री। तेजो ब्रह्मवर्चसं गायत्री। तेज एव ब्रह्मवर्चसमारभ्य प्रयन्ति.

3 C एतद्वैषुवतीयमहश्छन्दोम्य. छन्दोम्य is not found in MW, VPK and Index Védique. Chandomas are the seventh, eighth and ninth days of the daśarātra.

4 See Indische Studien Vol.VIII, p.16.

5 C त

6 C उपरिष्टोद्.

7 The chandoma days are performed in the last month of the gavāmayana long after the viṣuvat, which comes just before the seventh month.

8 C -स्याहश्.

9 C तोन.

10 A B विपुवतच्, C विपुवत.

11 C छन्दामास्.

12 C तेन.

## २.३४

तद् आहुर् यत् षट्कृत्वः[1] पुरस्ताद् विषुवतः पृष्ठ्यान्य् उपयन्ति विश्वजिति सप्तमम् उपरिष्टात्[2] कथं तत् सभारम् इति । स ब्रूयाद् यद् वा अर्वाचीनं [3]विषुवतस् तद् अयं लोको[4], यद् ऊर्ध्वं[3] विषुवतस् तद् असौ लोकः । [5]आसन्न[6] इव वा अयं लोकः[5] । प्ररिक्त[7] इवासाव् अन्यः । द्वितीयो ह्य् अयं लोकः । तद् यद्[8] विश्वजिति सप्तमम् उपरिष्टात् पृष्ठ्यान्य् उपयन्त्य् एवं सभारम् इति । अथो य एवम् उ य एव विश्वजित् पृष्ठमयम्[9] एव । गौर् वै रथन्तरम्[10] अश्वो बृहद् अजा वैरूपम् अविर् वैराजं व्रीहयश् शक्वर्यो यवा रेवतयः । स एष रससंसिक्तो[11] यत् पृष्ठानि[12] । तस्यैषो ऽक्षो यद्[13] गायत्रीषु बृहद् अग्निष्टोमसाम भवत्य् एतस्य रसस्यानपवर्दाय[14] । अथ य एतन् निर्हृतपृष्ठम्[15] उपयन्ति विषिक्तरसं[16] ते विश्वजितं शून्यं[17] उपयन्ति । ते न किं चन व्यश्नुवत[18] । तस्मात् पृष्ठमय[19] एव विश्वजित् कार्य इति ॥ ३४ ॥

1 C षरोकृत्व:.

2 The seventh pṛṣṭhya-ṣaḍaha is performed after the viṣuvat in the seventh month.

3 A B omit विषुवतस्तदय लोको यदूर्ध्वं.

4 C लाको.

5 C omits this sentence.

6 A असन्न.

7 B प्ररिक्ता.

8 C य.

9 पृष्ठमय is not found in MW, VPK and Index Védique. It qualifies अहर् (neut).

10 A B C रथन्तरन्तरम्

11 A B C रसस्ससिक्तो. It is contrasted with विषिक्तरस. Can it be construed स एष ससिक्तो रसो यत् पृष्ठानि (रस being put first for emphasis)?

12 C पृष्ठयेन. Cf. JB I.333 तस्मिन् पृष्ठरूपं वा गायेत्ता वा व्याहृतीर्व्याहृत्योद्गायेद्वैश्चावश्चाजाश्चाविश्च व्रीहिश्च यवश्चेति। गौरेव रथन्तरमश्वो बृहदजा वैरूपमवि-राज व्रीहयश्शक्वर्यो यवा रेवतय। तथेऽस्माद् रसात् सृष्टा भवन्ति तानस्मिन् दधाति। तदाप्याययति। तेनाप्यायीनेन रसवता स्तुत भवति.

13 A B C यत्

14 B रसस्यानपदर्दय, C रसस्यानवद्दय. Reading is uncertain

15 C निर्वृतपृष्ठम्. Neither निर्हृतपृष्ठ nor निवृतपृष्ठ are to be found in MW, VPK and Index Védique.

16 विषिक्तरस is a new compound.

17 Because it is विषिक्तरस.

18 C व्याशुवते.

19 C पृष्ठमथ.

## २.३६

तद् धैतद् एके स्वरसाम्नां स्वराण्य्[1] एव पृष्ठानि कुर्वन्ति। पृष्ठेन वा अहर् आख्यायते, स्वरसामान इत्येत आख्यायन्ते। तस्मात् स्वरसाम्नां स्वराण्य् एव पृष्ठानि कार्याणीति। ते चेत् स्वराणि पृष्ठानि कुर्युर् यानि पृं (?) भवन्ति तान्य् एकबृहतीषु[2] कुर्युः। तद् उ होवाच शाट्यायनिर् वयं वाव प्रत्यक्षं स्वराणि पृष्ठानि कुर्मो ये बृहद्रथन्तरे[3] कुर्मः। इदं वै रथन्तरम् अदो बृहत्[4]। आभ्याम् उ वै लोकाभ्याम् इदं सर्वं स्पृतम्[5]। [6]तस्माद् बृहद्रथन्तरे[6] एव पृष्ठे[7] कार्ये इति।

अथो हैते विच्छिन्नान् स्वरसाम्न उपयन्ति ये त्रीण्य् उपयन्ति। सर्वाण्य् एव कार्याणि। तथा[8] द्वाभ्यां द्वाभ्याम् [9]अहस् तायते[9]। एवं संगृहीता स्वरसामानो भवन्त्य् अविच्छिन्ना[10], अथो [11]पापवस्यसस्य व्यावृत्त्या[11] इति।

तद् धैतद् एके विषुवतो बृहतीष्व् एव[12] बृहत्[13] पृष्ठं कुर्वन्ति[14] — ॥३५॥

1 स्वराणि refers to the sāmans.

2 C एकबृकहतीषु. एकबृहती is a new word, of uncertain significance.

3 C बृहद्रथन्तरे. बृहद्रथन्तर 'rathantara and brhad' NOT 'brhad and rathantara'.

4 Cf. JB II.84 इदं वै रथन्तरमदो बृहत्.

5 C स्पृणम्.

6 A B तस्मात्बृहद्रथन्तरे, C तस्मात्महद्रथन्तरे.

7 C पृष्ठ.

8 C तथा तथा.

9 The phrase अहस्तायते occurs in KB XXVI.7, besides JB II.278(283) ter, 280 (285), 281,(286) bis, III.135,316.

10 अविच्छिन्न 'undivided'.

11 A B वापवस्य व्यावृत्त्या, C वापवस्यसस्य व्यापृत्त्या. पापवस्यसस्य व्यावृत्त्यै 'for the prevention of confusion' occurs in JB II.183 (188), III.306, TB I.8.6.5, II.1.8.2, ŚBM XII.7.3.15.

12 B ए.

13 बृहत् neut. acc. sg. of बृहत् (sc. साम).

14 The topic is continued in the next section.

## २.३६

—बार्हतो विषुवान्, बार्हतो वासाव् आदित्यः। बृहत्याम् एष[1] एतद् अध्यूढस्[2] तपति। नस्माद्[3] बृहतीष्व् एव बृहत् पृष्ठं कार्यम् इति[4]।

अथ हैके बृहतीष्व् एव दिवाकीर्त्यं[5] पृष्ठं कुर्वन्ति। बृहत्यायतनानि पृष्ठानि। इदं (MSS इयं) वा अन्तरिक्षं बृहती[6]। तस्याम् अयं वायुर् अन्तः पवते। तत् पृष्ठं[7], तस्या[8] उ एव यद् द्वादशाक्षरं पदं तेन[9], जगतीषु[10] कृतं भवति। एवं तृतीयसवनम् अयातयाम[11] क्रियत इति। तद् उ होवाच शाट्यायनिर्[12] जागतो विषुवान्[13]। जागतम् एतत् साम। जागतो ऽसाव् आदित्यः। यदा[14] ह्य् एष उदेत्य् अथ जगद् एतस्यैव [15]प्रयाणम् अनु प्रैति[15]। तस्माज् जगतीष्व्[16] एव दिवाकीर्त्यं[17] पृष्ठं कार्यम् इति[18]। ततो यास् तिस्रो[19] जगत्यश् चतस्रस्[20] ता बृहत्यः[21]। तेन बृहतीषु कृतं भवति। तास् संस्तुता अष्टाविंशतिर्[22] बृहत्यस् संपद्यन्ते। तेनो एव बृहत्य् अन्तरिता भवति। अथो हैतत् प्राणस्यैव रेतो निर्मितं यद् दिवाकीर्त्यम्। प्रजननं[23] जगती। सो ऽसाव् आदित्यः। तद् यज् जगतीषु दिवाकीर्त्यं[24] पृष्ठं[25] कुर्वन्ति ते[26] स्वेनैवैनं[27] तद् आयतनेन समृद्धयन्ति। तेनैभ्यस् समृद्धेन स्वायां जनतायाम् ऋधुकं[28] भवति ॥३६॥

1 C एषु.

2 C अध्यूढ.

3 A B C तस्मात्.

4 C इ. 'So on the bṛhatī (verses) the bṛhat (sāman) should be made the pṛṣṭha (stotra)'.

5 In PB IV.6.12 also the viṣuvat day has the divākīrtya sāman. The term divākīrtya comprises five ādityasya vrata śukriyāṇi: bhrāja, ābhrāja, vikarṇa, bhāsa and mahādivākīrtya. The bhrāja sāman (Ār. gāna VI.1.5) is composed on अग्न आयूंषि पवसे (Ār. ārc. V.1), the ābhrāja (Ār. gāna VI.1.6) on अग्निर्मूर्धा (Ār. ārc. I.27), the vikarṇa (Ār. gāna VI.1.7) on विभ्राड् बृहत् (Ār. ārc. V.2); the bhāsa (Ar. gāna VI.1.8) on प्रक्षस्य वृष्णः (Ār. ārc. III.8), the mahādivākīrtya (Ār. gāna VI.1.9-18) on different stobhas and Ār. ārc. V.2 (विभ्राड् बृहत्).

बृहत्यायतन is not found in MW and Index Védique. It is quotable only from KB XVIII.2 बृहत्यायतनानि पृष्ठानि भवन्ति. The editor of VPK emends it to बृहदायतन on the basis of PB XIII.10.15 (which is the only place where बृहदायतन occurs). The emendation, unsupported by any MSS authority (see Lindner's edition), is unnecessary because in the agniṣṭoma it is always on the bṛhatī-verses that the pṛṣṭha-sāmans (excepting the second, maitrāvaruṇa, stotra which is always chanted on the gāyatrī) are chanted. The emendation is further weakened by the occurrence of बृहत्यायतन in the present passage and in JB II.48.

6 Mark the position of the subject, बृहती. Also cf. PB VII.3.9 अयं मध्यमो (sc. लोकः i.e. अन्तरिक्ष) बृहती.

7 C पृष्ठां.

8 तस्याः = बृहत्याः

9 Note the pendent disjunctive construction.

10 C जागतीषु. A bṛhatī has four pādas (8+8+12+8), the third pāda having 12 syllables. 12 syllables is the mea-

sure of the jagatī pāda too. Hence the relationship. Cf. JB I.206 तासा (*i.e.* बृहतीनां) यद्द्वादशाक्षराणि पदानि तेन जागतीभ्यो नयन्ति.

11 अयातयाम 'of unexhausted strength'.

12 A B C शाट्यायनि·.

13 C विषुवा

14 C यद.

15 A प्रयणमनुप्रेनि, C प्रायणमनुप्रैती.

16 A B C जागतीष्व्.

17 A C दिकीर्त्य.

18 'Therefore on the jagatī (verses) the divākīrtya (sāman) should be made the pṛṣṭha (stotra)'.

19 C तस्रो.

20 A चतसृस्

21 3 jagatīs = 3×48 = 144 syllables. 4 bṛhatīs = 4×36 = 144 syllables. Hence 3 jagatīs = 4 bṛhatīs.

22 A अष्टाविंशानि

23 C प्रजनन.

24 C दिवकीर्त्य

25 C पृष्ठा.

26 A B omit ने.

27 C स्वेनैनैव.

28 A B ऋधुंक, C अधुंकं See note 14 on JB II.13

# २.३७

तद् एतत् पृच्छन्ति किं तद् दिवाकीर्त्यं ऽहन्[१] क्रियते येन प्रजाः प्रजनयनि येन च प्रजा दाधारयति[२] । स ब्रूयात् प्राणस्यैव रतो निर्मितं यद् दिवाकीर्त्यम् । प्रजननं जगती[३] । तेन प्रजाः प्रजनयाति । अथ यत् प्राणो[४] भूत्वा पराणि चावराणि चाहानि[५] दाधर्ति[६] तेनो एव प्रजा दाधारयति[७] । प्राण[८] एव दिवाकीर्त्यम्[९] । चक्षुषी भ्राजाभ्राजे[१०] । श्रोत्रं विकर्णम्[११] । वाग् दशस्तोभम्[१२] । त इमे प्राणा [१३]मध्यतो हिताः[१३] । तद् धै[त]द्[१४] एक उदित एवाज्यग्रहान्[१५] गृह्णन्ति । उदिते[१६] प्रातरनुवाकम् उपाकुर्वन्ति[१७] । दिवाकीर्त्यं वै नामैतद् अहः । तन् न राञ्या संस्मजेयुर्[१८] इति । तद् उ होवाच शाट्यायनिस् सामभिर् वा [१९]अहान्य् अभिष्टुतान्य् ऋग्भी[१९] रात्रयः । सैषा रात्रिर् अनभिष्टुता[२०] शून्या[२१] भवति[२२] । अथो प्रजापतिर् एष यत् प्रातरनुवाकः[२३] । तम् आयतनाच् च्यावयन्ति[२४] । स य एनांस् तथा चक्षुषो[२५] ब्रूयाद् आयतनाद् वा च्योष्यन्ते ऽस्माद् वा लोकाद् इति, तथा हैव स्युः । तस्माद् यथैवेतरेषाम्[२६] अह्नां तथा कार्यम् ।

प्राणापानाव् उपांश्वन्तर्यामौ[२७] । उदिते ऽन्यं जुह्वत्य्[२८] अनुदिते ऽन्यम् । बहिर्[२९] वै सन्तं प्राणम् उपजीवन्त्य् अन्तस् सन्तम् अपानम् । तद् यद् उदिते ऽन्यं[३०] जुह्वत्य्[३१] अनुदिते ऽन्यं, बहिस् सन्तं प्राणम् उपजीवामान्तस् सन्तम् अपानम् इति । अथ य [३२]एताव् उदिते[३२] जुह्वति[३१], प्राणापानाव् उत्खिदन्ति[३३] । स य एनांस् तथा चक्षुषो[२५] ब्रूयात्[३४] प्राणापानाव् उदखात्सुर्[३५] मरिष्यन्तीति, तथा हैव स्युः । तस्माद् यथैवेतरेषाम् अह्नां[३६] तथा कार्यम् ॥३७॥

1 The viṣuvat day is also called the divākīrtya day, *e.g.*, in PB XXIII.16.1 and XXIV.20.1 (scheme of gavāmayana).

2 दाधारयति 3 sg. causative of intensive of √धृ (Whitney, Grammar §1025).

3 Cf. JB II.36 अथो हैतत् प्राणस्यैव रेतो निर्मितं यद्दिवाकीर्त्यम् । प्रजननं जगती.

4 C प्राणे.

5 Wh omits अहानि.

6 A B C दाधर्त्ती, Wh दाधर्त्ति. दाधर्ति

3 sg. intensive present of √ घृ (Whitney, Grammar §1007a). See Over en uit het JB p.23.

7 C inserts स ब्रूयात् after it.

8 C प्राणा.

9 Divākīrtya corresponds to mahādivākīrtya in note 5 on JB II.36.

10 C भ्राजाभ्रजे.

11 On the vikarna sāman see note 5 on JB II.36.

12 Daśastobha is the bhāsa sāman: Sāyaṇa's comm. on PB IV.6.16 इदं भासं दशस्तोभं भवति । आद्यन्तयोः प्रयुज्यमाना हाउहावादयो भासान्ता दश स्तोभास्तैर्युक्तमेतत्. See note 5 on JB II.36.

13 B मध्यने हिताः, C मध्यने एना°.

14 A omits धैतद्, Wh धै.

15 C एवाजग्राहान्.

16 The phrase (*an*)*udite sūrye* or *āditye* is many times abbreviated by the omission of the noun—ŚBM II.1.4.8,9,3.1.2, 5,9,12,3.9, III.2.2.26, IV.1.2.11, 12,14, AB (Aufrecht's ed.) V.29.3-8, 30.1,4, 15, 31.1-4, TB I.7.5 3, 10.5, III.8.16.4, KB II.9, XII.4, JB I.5,6,213,II.38,269.

17 The prātaḥsavana begins with the prātaranuvāka hymn. Cf. KB XXV.10 सप्रातरनुवाकमेतदहर्दिवाकीर्त्यं भवति.

18 संसृजेयुरिति or संसजेयुरिति ?

19 A अहान्यभिषुतान्य्-, B अहान्यभिषुतोन्य्-, C अहन्यभिषुतानृभिम.

20 A अभिष्टुता, B अनभिष्टुत, C अभिष्टुत.

21 A B न्या.

22 C भवन्ति.

23 Cf. KB XXV.10 प्रजापतिर्वै प्रातरनुवाकः.

24 C च्यवयन्ति.

25 C चक्रुवो.

26 B यथैवैतरेषाम्.

27 So also Caland, Auswahl §119. But all the MSS read प्राणापाना उपांश्वन्तर्यामौ. For the dropping of *-v* of *-āv* < *-au* see ŚBK, introd. III § 5 b and cf. AB II.21 प्राणापाना उपांश्वन्तर्यामौ. Here the *-v* is not dropped in uniformity with प्राणापानावुत्खिदन्ति (infra) and प्राणापानावुदखात्सुः (infra) where the *v* is found in all the MSS.

28 C जुह्वत्य्.

29 C वर्हि.

30 C त्वं.

31 C जुव्व-.

32 A B C एना उदिते, Wh एतावुदिते.

33 See note 37 on JB II.32 for parallel passages.

34 C भ्रया.

35 A ऊदुःखांसुर्, B उदुःखवांसुर्, C उदक्खांउर्, Auswahl §119 (note 1) उदक्खासुर्. Wackernagel, BSOS VIII p.826, has shown that it is not necessary to emend उदखात्सुः, an aorist corresponding to the present उत्खिदन्ति.

36 A अर्हि.

## २.३८

तानि वा एतानि दीक्षमाणाद् उत्क्रामन्त्य्[1] अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि[2] पशुबन्धः पितृयज्ञो[3] गृहमेधो ब्रह्मौदनो[4] मिथुनम्[5] । तद् यद् दीक्षोपसत्सु स्वाहेति व्रतयति[6], तेनास्य[7] दीक्षोपसत्स्व् अनन्तरितम्[8] अग्निहोत्रं भवति । यद् [9]उपांश्वन्तर्यामाव् उदिते ऽन्यं[9] जुह्वत्य्[10] अनुदिते ऽन्यं, तेन सुत्यायाम् । यत् पुरोडाशस्[11] तेन पौर्णमासम् । य[द्] दधि[12] तेनामावास्यम्[13] । यत्[14] पयस्या[15] तेन चातुर्मास्यानि । यत् पशुम्[16] आलभन्ते तेन पशुबन्धः । यद् उपासनान्य् उपास्यन्ति[17] तेन पितृयज्ञः[3] । यद् धानाः करम्भो[18] भवति तेन गृहमेधः । यत् [19]सौम्यम् आहरन्ति[19] तेन ब्रह्मौदनः[20] । यत

पत्नीस् संख्यापयन्ति[21] तेन मिथुनम्[22] ।

तद् धैक आहुः प्राणेन त्वा समवामर्नीत्य् एव प्रतिष्णाम्[23] अभिप्राण्यानीति । तद् उ होवाच शाट्यायनिर् अवकीर्णरूपम्[24] इवैतत् । एको वाव पुमान् प्राणावे विद्ययैवैनद् अनन्तरितम् अथो [25]यद् एव[25] यज्ञायज्ञीयस्य[26] स्तोत्रे संख्यापयन्ति[27] ॥३८॥

☞ Major part of this section has been edited in Auswahl

1 C युत्क्रामन्त्य्.

2 Cāturmāsyas are the three sacrifices (*viz.* वैश्वदेवम्, वरुणप्रघासा॰, साकमेधा) performed at the beginning of the three seasons, each of four months duration

3 All MSS पितुर्य्यंशो.

4 See Auswahl §120, note 2

5 B C मिथुन.

6 A B ब्रयेति, C प्रनेति. Cf. CH §55.

7 B C तानास्य.

8 C आन्तरितम्.

9 A B उपांश्वन्तर्यामावुदिनेन्य. C उपांश्वन्तर्यामावदितेन्य.

10 Cf. CH §§128,131.

11 Cf. CH §§143,186.

12 C दधिस्. Cf. CH §184.

13 A B तेनामावास्यां, C तेनेमावास्य.

14 B यत् यन्.

15 Cf Karka's comm. on Kātyāyana Śrautasūtra I.2.15 कथमेषां चातुर्मास्यान्यन्तरितानि भवन्तीति । पयस्ययेति ब्रूयात्

16 Cf. CH §141f.

17 A B C उपास्यन्ति Cf. CH §231 (with note 7)

18 Cf. CH §121.

19 A सौम्यामाहरन्नि, B सौम्यमाहनि, C सौम्यामाहरन्ति. Cf. CH §237.

20 All the MSS have ब्रह्मौदन (masc.) but Caland wrongly reads ब्रह्मौदनम् (Auswahl p 135, line 11). Correct 'ब्रह्मौदनम् JB 120' in VPK to ब्रह्मौदन॰.

21 C Auswahl §120 सख्यापयति. Cf. CH §241d

22 B C मिथुन Cf JB I 173 तां सख्यापयन्ति रेतोधेयाय.

23 प्रतिष्णा is not quotable from the other Brāhmanas MW gives प्रतिष्णा (स्ना) from the susāmādigana in the Kāśikā.

24 अवकीर्णरूप is not found in MW, VPK and Index Védique. अवकीर्ण 'who has spilt his semen virile, *i.e* violated his vow of chastity, TĀr' MW

25 A B यवैन.

26 C यज्ञायाज्ञीयस्य.

27 C सख्यापयन्तीनि. The text of this paragraph is uncertain.

## २.३९

तद् आहुर् यद् अन्यैर् अन्यैः[1] सामभि स्तुवते ऽन्या अन्या[2] अनुशंसन्त्य्[3] अथ कस्मात् समाना[4] गृहा इति । स ब्रूयाद् अन्नं वै साम[5] । अन्नम् ऋक् । प्राणा गृहाः । अन्यद् अन्यद् वै प्राणेभ्यो ऽन्नम् आहरन्ति । तस्माद् अन्यैर् अन्यैः[1] सामभि स्तुवते ऽन्या अन्या अनुशंसन्ति समाना[6] एव गृहा इति ।

प्राणा एव साम[7] । तन् मूलम् । अथ यथा वृक्षस्य स्कन्धांसि वा शाखा वा[8] पलाशानि वैवम् अन्यानि सामानि[9] । स य एतद् एवं वेद सर्वाण्य् एवास्य सामानि विदितानि[10] भवन्ति ।

वाग् एवर्क्[11] । तन् मूलम् । अथ यथा वृक्षस्य स्कन्धांसि वा शाखा वा पलाशानि वैवम् अन्या ऋचः । स य एतद् एवं वेद सर्वा एवास्यर्चो विदिता भवन्ति ।

मन[12] एव यजुः[13] । तन् मूलम् । अथ यथा वृक्षस्य स्कन्धांसि वा शाखा वा पलाशानि वैवम्[14] अन्यानि यजूंषि[15] । स य[16] एतद् एवं वेद सर्वाण्य् एवास्य यजूंषि[15] विदितानि भवन्ति ॥३९॥

1 B C omit the visargas.

2 sc. ऋचः.

3 C अनुशंसत्य्.

4 A B C सामाना but see infra where समाना is the reading in all the MSS.

5 Cf. SVB I.1.3 तस्मादाहुः सामैवान्नमिति, JUB I.11.3 सोऽब्रवीदेकं वावेदमन्नाद्यमसृक्षि सामैव, PB VI.4.13 साम देवतानामन्नम्.

6 No v.l.

7 Cf. JUB I.25.10 स यः प्राणस्तत् साम, JUB III.1.18 तस्मात् प्राण एव साम, ŚBM XIV.8.14.3 प्राणो वै साम, ŚBM IX.1.2.32 प्राणा वै सामानि.

8 C शाखो for शाखा वा.

9 C omits सामानि.

10 C विदतानि.

11 Cf. JUB IV.23.4 वागृक्, JUB I.9.2 वागित्यृक्, JUB I.25.8 सा या सा वागृक् सा, ŚBM IV.6.7.5 वागेवर्चश्च सामानि च.

12 C मान.

13 Cf. SBM IV.6.7.5 मन एव यजूंषि, ŚBM VII.3.1.40 मनो वै यजुः, JUB I.25.9 अथ यन्मनो यजुष्टत्.

14 C वैम्.

15 A यजुंषि.

16 C omits य.

## २.४०

तद् आहुः किं नातिष्टुवन्ति[1], किं नातिशंसन्ति, किं नातिगृह्णन्तीति[2] । स ब्रूयात् प्राणम् एव नातिष्टुवन्ति[1] । स्तुते[3] वै प्राण एव परिशिष्यते । वाचम् एव नातिशंसन्ति । शस्ते वै वाग् एव परिशिष्यते । मन एव नातिगृह्णन्ति । गृहीते[4] वै मन एव परिशिष्यते । नातिष्टुतं नातिशस्तं नातिगृहीतम् एवंविदस्[5] संपन्नम् एव भवति ।

अथ ह वै समृद्ध एव यज्ञ[6] उपासितव्यः । यद् अधीयन्न् अनुपहन्यमानः[7] करोति तत् स्वर्ग्यम् । स्वर्ग्यं[8] ह एतत्, स्वर्गलोक एतेन भविष्यामीत्य् एव[9] तद् विद्यात् । अथ यद् दुरधीयन्न्[10] उपहन्यमानो विषिञ्चन्[11] करोति, पुष्टिस् सा प्रजननम् । पुष्टिर् ह एषा प्रजननं, बहुर् भविष्यामि प्रजनिष्य इत्य् एव तद् विद्यात् ॥४०॥

1 All our MSS नातिष्टुवन्ति, Wh नातिस्तुवन्ति (cf. Wackernagel I, p.234, §204b).

2 C नातिगृह्णन्तीती, Wh नातिगृह्णन्ति.

3 For the omission of the noun, see Oertel, Syntax of Cases in the Prose of the Brāhmaṇas §60 Ex. 189, p. 260.

4 B गृहीत.

5 B C एवंविद.

6 Cf. ŚBM XI.4.4.8f.

7 C अनुपनन्यमानः.

"The √*han*+*upa* (PW 'anstossen, stecken bleiben im Rezitieren') refers to the omission of a letter in the recitation; cf. the comm. to AB III.35.3 *adhīyann upahanyāt* which it glosses by *upaghātam varṇalopam kuryāt*. The passive voice is used in the same sense at TS VII.3.1.1 *sa yo vai daśame' hann avivākya upahanyate sa*

*hīyate*, 'He is left (=lost) who on the tenth day, *viz.* on the avivākya day, makes an error (through the omission of a letter)". Oertel, Syntax of Cases in the Prose of the Brāhmanas §68 Ex. 2 p.299.

8 A स्वर्गम्, B C स्वर्गम.
9 C अव
10 B C दूरर्धीयन्न्.
11 In the Brāhmanas विषिञ्चन् occurs only in TB I 6.3.10.

## २.४१

अथ ह वै त्रयः पूर्वे ऽग्नय[1] आसुर् भूपतिर् भुवनपतिर्[2] भूतानां पतिः। अयं वै लोको भूपतिर्, अन्तरिक्षं[3] भुवनपतिर्, असाव् एव लोको भूतानां पतिः। अथ[4] हायं भूतिर्[5] नाम। तेषां ह वषट्कारश् शीर्षाणि चिच्छेद। त[6] इमास् तिस्रः[7] पृथिवीः[8] प्रविविशुः। तस्माद् यद् अग्निहोत्रस्य वाज्यस्य[9] वावस्कन्देत्[10] तद् अभिमृशेद् भूपतये स्वाहा, भुवनपतये स्वाहा, भूतानां पतये स्वाहेति[11]। एतेषु हैवास्याग्निषु हुतम्[12] अस्कन्नं भवति[13]।

अथ ह वै त्रयः पूर्व ऋषय आसुश् शूर्पयवम् अध्वाना अन्तर्वान् कृषिम् सोल्वालाः[14]। ते ह यज्ञस्य कृन्तत्राणि[15] ददृशुः। तस्यैताः प्रायश्चित्तीर्[16] ददृशुः—शं च म, उप च म, आयुश् च मे, भूयश् च मे, यज्ञ[17] शिवो मे संतिष्ठस्व, यज्ञ स्विष्टो मे[18] संतिष्ठस्व, यज्ञारिष्टो[19] मे संतिष्ठस्वेति[20]। तस्माद् एता दर्शपूर्णमासाभ्यां वा चातुर्मास्यैर् वा पशुबन्धेन वा सौम्येन[21] वाध्वरेणेष्ट्वोपरिग्राज्[22] जपेत्। यद् एवात्र यज्ञस्य विधुरं भवति तद्[23] एव तेन शमयति।

प्राण एवाविषुवतो व्यानो विषुवान्[24] अपानो यद् ऊर्ध्वं विषुवतः। अपानो वा इदं सर्वम् आहरति। तस्माद् वयं परस्ताद्[25] विषुवतो ऽर्वाचष्[26] षडहान् उपैमः॥४१॥

☞ This section has been edited in Auswahl §§121-122 up to यदेवात्र यज्ञस्य विधुरं भवति तदेव तेन शमयति. Cf. KS XXV 7, ŚBM I.3.3.13f.

1 C ग्न.
2 A भुवनस्पतिर्.
3 C अन्तरिक्ष.
4 C अस.
5 A B भूपतिर्. KS XXV has भूत..
6 A B C म.
7 C तिस'.
8 A B C पृथिवी.
9 =वा+आज्यस्य.
10 =वा+अवस्कन्देत्.
11 It is not from JS. It occurs in TS II.6.6.2-3, MS III.8.6, KS XXV.7 (bis), XXXV.8, ĀŚS III.13.15, ĀpŚS IX.13.6,7, MŚS III.1.32.

12 For genitivus agentis with हुत, the p.p.p form of √हु cf. JB I.6 (bis),8, 57, III.116, ŚBM I.3.3.17, I.8.1.39, I 9.2.20, III.2.2.13, III.2.2.18, IV.1.2.20, VI 3.3.22, IX.1.1.5, IX.3.1.17, IX.5 1.61, 68, XI.1.7.4, XI.5.3.4, XI.6 2 9,10, XII.4 3.10, XIV.2.1. 20, TB II.1.5.9,10, II.1.6 5, II.1.10.1 (bis), 2 (ter), 3 (bis), III.7.3.1-4, AB V.29.5,7, V.31.3,4, GB I.3.11, KB II.8, VII.3, MS I.4. 12, 13, I.8.7, III.6.5,6, KS XXI.7, XXIII.5, XXIV.9 (=Kap XXXVIII.2), TS III. 4.10.3.

13 Cf. ŚBM I.3.3.13f., esp. 17 स स्कन्नमभिमृशति। भुवपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेत्येतानि वै तेषामग्नीनां नामानि। यद्भुवपतिर्भुवनपतिर्भूतानां पतिस्तद्यथा वषट्कृतं हुतमेवमस्यैतेष्वग्निषु

भवति. Also cf. KS XXV.7.

14 C सोल्लोला:. Note that here the Kāṇva version of ŚB is closer to JB than the Mādhyandina. ŚBK II.2.8.3 has तान् ह ऋषीन् यज्ञं तन्वानानेते गन्धर्वा उपनिषेदुः शूर्पेयवमद्वानोऽन्तर्वान् कृषिः सोल्वला ते ह ..., while in ŚBM XI.2.3.11 the names read शूर्पं यवमान् कृषिरुद्वालवान् धानान्तर्वान्.

15 A B C कृन्तन्त्राणि.

16 A B C प्रायश्चित्तिर्.

17 All MSS यशश्, but Vedic Concordance, Auswahl §122 give no variant. ĀpŚS IV.16.15 also reads यश.

18 C मेव.

19 C यज्ञारिषो.

20 शं च म . यज्ञारिष्टो मे संतिष्ठस्व is not found elsewhere according to Bloomfield's Vedic Concordance. ĀpŚS IV.16.15 has यज्ञ शिवो मे संतिष्ठस्व...यज्ञारिष्टो मे संतिष्ठस्व..

21 C साम्येन.

22 C वाध्वरेणेष्ट्वापरिष्टा.

23 A B C ताद्.

24 C विषुपान्.

25 B पुरस्ताद्.

26 C वोंद्यष्.

## २.४२

तद् ध ऋतुजिज्[1] जानकिर् इयर्पि[2] सौमापं[3] पप्रच्छ—प्राणेन [4]स्वी[३]द् अपानेना[३][4] अस्मिञ् जीवति मर्त्यः । [5]तद् ब्रूतात्[5] संगतेभ्यः कुरूणां ब्राह्मणेभ्य इति । स होवाचेहैवाहं त्वां प्रतिवक्ष्यामीति । तं ह प्रत्युवाच—न प्राणेन नापानेन । अस्मिञ् जीवति मर्त्ये व्यानो ऽध्यक्षः पशोस् सतं [6]विष्वंचमीय्यत इति । पुरुषो वै पशुः । पशुरुन् पशुस् सः । व्यानो ह वा एतं विष्वंचमीय्यते ।

तान् वा[7] [8]एतान् एके[8] परस्ताद् विषुवत ऊर्ध्वान् एव षडहान् उपयन्ति । यं वावैतं[9] पृष्ठ्यं पूर्वम् उपैमस् तेन व्यावृत्ता भवन्ति । अथो एवम् अजामीति[9] । तद् उ होवाच शाट्यायनिर् उभये वा एत[10] ऊर्ध्वा भवन्ति ये चोर्ध्वा ये चार्वाञ्चः । सवनैर् वा एत ऊर्ध्वा भवन्त्य् आप्नुम उ तं कामं य आवर्तेष्व् इति ।

तद् आहुर् यद् यथापां विवर्त[11] एवम् एते यद्[12] गोआयुषी । कतरेषाम् एते अह्ना(म्)[13] । परेषाम् अवरेषाम्[14] इति । उभयेषाम् एवेति ब्रूयात् । उभयानि ह वा एते अहानि संगृह्य तिष्ठतः पराणि चावराणि[15] च । तस्मात् त्र्यहेणान्यत् तनुमहे त्र्यहेणान्यत्[16] । स द्वयहस्[17] सन् षडहो भवति । तद् ऊर्ध्वे गोआयुषी भवत ऊर्ध्वो[18] दशरात्रः ।

तद् धैतद् एके विहृते गोआयुषी उपयन्ति—उपरिष्टाद् विश्वजित आयुः पुरस्ताद् दशरात्रस्य गाम् । एवम् अजामीति[19] । अथो एवम् एवैतयोः पुरोपाययनम्[20] । तत् प्रमत्ता नैमिशीया अतीयुः । ते ऽत्र पुरस्ताद् दशरात्रस्य सहोपेयुः । तत इदम् अर्वाचीनम् एवोपयन्ति[21] ।

तद् उ होवाच शाट्यायनिः [22]प्राणापानाव् एतौ[22] यद्[23] गोआयुषी[24] । अन्नपाने[25] ते विच्छिन्दन्ति[26] ये विहरन्ति । अथो एष वाव देवयानः पन्था यद्[23] गोआयुषी । स्वर्ग एष लोको यद् दशरात्रः । त एतेन देवयानेन पथैतं स्वर्गं लोकं गच्छन्ति ।

अथ य एते विहरन्त्य् एतं देवयानं[27] पन्थानं विच्छिन्दन्ति[28] ते न किं चन व्यश्नुवते[29]। तस्मात् सहैवोपेत्ये इति ॥४२॥

1 A B C क्रतुजिज्.

2 A C व्यापि, B व्यपि.

3 C सौमापी. Here the MSS are corrupt. At JB I.281, 299 it is correctly read as इयपि सौमाप (also see Auswahl, p. 299).

4 C स्वीनुदपानेनाग्रु.

5 C स भ्रूयात्, Auswahl p 300 तद् भ्रतात् (wrong Sandhi !)

6 The text is uncertain. C omits विष्वचमीय्यत . य वावैत.

7 B व.

8 A एतेतेके, B एतेनके

9 C अजामिति.

10 sc. अहनी.

11 C विवर्नंत.

12 A B C यत्.

13 कतरेषामेते अह्नाम् 'of which days are these (i.e. the go- and āyus days the ivarta)' ? To complete the sense supply उपयन्ति at both places.

14 B अपरेषाम्, C omits अवरेषाम्

15 A C चापराणि.

16 A व्यहेणान्यम्, B C व्यहेणान्य.

17 A इहस्, B C इह.

18 C ऊर्ध्वां.

19 C अजामिति

20 So all the MSS'

21 Auswahl, p. 310 s.v. Naimiśīya reads एवमुपयन्ति.

22 C प्राणापानास्तौ.

23 A B C यत्.

24 C गोआयुषि.

25 C अन्नवाने.

26 A B विछन्दन्ति

27 C देवयान.

28 B विच्छन्दन्ति, C विछन्दन्ति.

29 C व्याश्नुवने.

## २.४३

गोबलं ह वार्ष्णं[1] शाट्यायनिर् उवाच—पितृमान् असि[2] भगवः पितामहवान्[3]। संवत्सराय दीक्षिष्ये[4] ऽनु मा शाधीति। तथेति होवाच। अयनं ते वक्ष्यामि, यद् विद्वान् अनार्तस् संवत्सरस्योदृचं गच्छत्य्[5] उत्थायां योगक्षेमी[6] पणाय्यो[7] भवतीति। तान् वा एतान् द्वादश मासो यन्तीति होवाच। ततो[8] यांश् चतुरो मासो[9] यन्त्य् अग्नेर् एव[10] तान् अयनेन यन्ति। अग्निं चैव तेन देवतानाम् उपाप्नुवन्तीमं च[11] लोकम् इति। अथ यान् अपरांश्[12] चतुरो मासो यन्ति वायोर् एव तान् अयनेन यन्ति[13]। वायुं चैव देवतानाम् आप्नुवन्त्य् अन्तरिक्षलोकं[14] चेति। यान् अपरांश् चतुरो मासो यन्त्य् आदित्यस्यैव तान् अयनेन [15]यन्ति। आदित्यं[15] चैव तेन देवतानाम् उपाप्नुवन्त्य् अमुं च लोकम् इति ॥४३॥

1 B वाष्ण, C वाष्णि. गोबल वार्ष्ण occurs as a teacher in TB III.11.9.3 and JUB I.6.1.

2 B C असी.

3 C Wh पितामहान्. पितामहवान् is not found in MW, VPK and Index Védique.

4 For the dative संवत्सराय with √दीक्ष्, cf. ŚBM VI.1.3.7, XII.1.1.1 = GB I.4.1, ŚBM XII.2.1.1 = GB I.5.2, ŚBM XII.2.1.9, XII.2.2.8, XII.3.3.1 = GB I.5.10, ŚBM XII.3.5.3-10 = GB I.5.9, TS VII.4.8.1, JB II.56, II.399 दीक्षन्ते.. संवत्सराय, III.399

स्वर्गाय वा एते लोकाय दीक्षन्ते ये संवत्सराय.

5 A B C गच्छन्त्य्.

6 योगक्षेमी is found in Mahāvastu III p.384. On योगक्षेम see Oertel, Syntax of Cases in the Prose of the Brāhmaṇas §60 Ex.115 Excursus, p.223f. and Ray, BSOS VII, p.133.

7 C पर्णायो. पणाय्य 'praiseworthy, laudable'.

8 C तता.

9 Acc. pl. of मास्.

10 C एस्.

11 C omits च.

12 B अपुरांश्.

13 A ययन्ति.

14 C अन्तरिक्षं लोकं.

15 C यन्वादित्यं for यन्त्यादित्यं (note the change of -त्य- to -न्व-).

## २.४४

एतद् वा अयनम् इति होवाच । तद् यद् वा इदम् आहुर् अनयनेनागाद्[1] इति । य एवैतद् [2]अविद्वांसस् संवत्सराय[2] दीक्षन्ते ते[3] ऽनयनेन यन्ति । अथ य एतद् एवं वेदानार्त[4] एव संवत्सरस्योदृचं गच्छत्य्[5] उत्थायो योगक्षेमी[6] पणाय्यो[7] भवति[8] । त एतं स्वर्गं लोकम् आगच्छन्ति ।

एतन् महाव्रतीयम्[9] अहः । एष वाव[10] स्वर्गलोको यन् महाव्रतीयम्[11] अहः । तत् पञ्चविंशं भवति[12] । ततो या[13] विंशतिर्[14] विराट् सा । अथ[15] याश् चतस्र इमा एव ताश् चतस्रो दिशः । अथ या पञ्चविंशीयम्[16] एव सोर्ध्वा दिक् । दिशो वै यत्र[17] समुदश्रयन्त[18] तद् एषो ऽत्यग्रो नाम लोको ऽभवद् य एष तपति । एतम् एवैतत् पञ्चविंश्याभ्यारोहन्ति[19] । एतस्य सलोकतां गच्छन्ति ।

तद् आहुर् यद् एतेनाह्ना भूयिष्ठम् [20]ईप्सन्ति यन्[20] महाव्रतीयेनाथ[21] कस्माद् अयं वारणः पञ्चविंशस्तोमः क्रियत इति । कृत्स्नस्यान्नाद्यस्यावरुद्ध्या[22] इति ब्रूयात् । पुरुषम् एव पञ्चभि स्तोत्र्याभिर्[23] अवरुन्द्धे[24] गां पञ्चभिर् अश्वं पञ्चभिर् अजां पञ्चभिर् अविं पञ्चभिः । स एष कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्या[25] अन्ततः पञ्चविंशस्तोमः क्रियत इति ।

अथ [26]याव् अतिरात्रौ[26] प्रतिष्ठैव सा । अस्मिन्न् एव लोके प्रायणीयेनातिरात्रेण प्रतिष्ठाय प्रयन्ति[27] । अमुष्मिन् लोक[28] उदयनीयेनातिरात्रेण[29] प्रतिष्ठायोद्यन्ति । ते हाप्य् अबुभूषन्त इव भवन्ति, प्रत्य्[30] इव तिष्ठन्ति ॥४४॥

1 C अवनेनागाद्.

2 C अविद्वांससंवत्सरंय.

3 C omits ते.

4 B वेदानात्त, C वेदानान्त

5 C गछन्त्य्.

6 A B C योगछेमी. Note -छ- for -क्ष-.

7 C पर्णायो.

8 Cf. JB II.43 यद्विद्वाननार्तस्संवत्सरस्योदृचं गच्छत्युत्थायो योगक्षेमी पणाय्यो भवतीति

9 A B C महावृतीयम्.

10 A B C वावा.

11 A C महावृतीयम्. Cf. JB II.8 एष वाव स्वर्गो लोको यन्महाव्रतीयमहः.

12 The mahāvrata is a pañcaviṃśa day (TB II.6.1.2 पञ्चविंशस्तोमो भवति).

13 C वया

14 C विशनि.

15 B C अथ.

16 C पञ्चविंशतीयम्. In the other Brāhmanas the word पञ्चविंशी occurs only in PB IV.10.7 (Sāyana पञ्चविंशतिसंख्यापूरणी स्तोत्रीया). Cf. JB II.212(217) त उ वै पञ्च पञ्चविंशा भवन्ति । तनो या विंशतिर्विराट् सा । अथ याश् चतस्र इमा एव ताश्चतस्रो दिशो ऽथ या पञ्चविंशीयमेव (*v. l.* पञ्च पञ्चविंशीयमेव) सोर्ध्वा दिक्.

17 B गायत्र.

18 A B समुदुदश्रयन्त.

19 C पञ्चविंशा-.

20 B ईप्सन्तीयन्.

21 C महावृतीयेनाथ.

22 A B -रुध्या, C -रूध्या.

23 B C स्तोम्यमिर्.

24 A B C अदरुन्त.

25 A B C -रुध्या.

26 C यावतीरात्रे. The two atirātras (*i.e.* the prāyaṇīya and the udayanīya) are प्रतिष्ठा 'firm support'. Cf. JB II 186 (191) एषा वै कृत्स्ना प्रतिष्ठा यदतिरात्र

27 प्रयन्ति 'they commence' is contrasted with the following उद्यन्ति 'they arise'.

28 A C लाके.

29 B उदयनीयातिरात्रेण.

30 प्रति goes with तिष्ठन्ति.

## २.४६

अथैषौदुम्बरी राजासन्दी । तां हैक प्राचीम् एव निदधति[1] । उदीचीम् एव निदध्यात् । तस्या इमाव् अवान्तरदेशौ पूर्वौ पादाव् इमाव् अपरौ । तां हैके प्राचीम् एवाधिरोहन्ति । तद् उ होवाच शाट्यायनिर् उदृचो व सामार्त्विज्यं कुर्वन्ति । उदीचीनदेवत्या[2] उद्गातारः[3] । उदीच्यैवारुह्यात[4] । तां हैके नमस्कारेणैवाधिरोहन्ति[5] नमस् ते ऽस्तु भगवति विद्म त्वा सा नश् शिवैधीति[6] । तूष्णीं हैवैके[7] अधिरोहन्ति । मनो वै प्रजापतिः । प्राजापत्यम् एतद् अहर्[8] इति । ताम् अनेनाग्र ऽधिरोहेद्[9] अथानेनाथानेनाथानेनामृतं गमयेयम् इति ।

अथास्मा आरूढाय वाणं[10] शततन्त्रिम्[11] आहरन्ति । तम् एतेन संतानेन संतनोति—

भूर् भुव स्वर्
वदा वदा वदा[12] वदी वदा वदोरुः[13]
पृथुस् सुगस् सुगन्तु
कर्म करणः करः करिष्यन् ।
ऐन्द्रीं [14]वाचं बृहतीं[14] विश्वरूपाम् ।
शतायुषं[15] प्रवद देव वाण ॥

इति । अथेन्द्रतृणतया[16] चेषीकया[17] वेतसशाखया[18] चोल्लिखति[19]—मनो ज्योतिर् इति, वाक् सत्यम् इति[20] मानो भद्र[21] इति । तं प्रयच्छति ॥४५॥

INTRODUCTORY

In Auswahl §123 Caland has edited and translated अथास्मा आरूढाय ... भद्र इति.

Cf. JB II.418(425) आसन्दीमुद्गाताधिरोहति, प्रेंख होता, कूर्चावध्वर्युः । कूर्चेष्व् एवान्या होत्रा भवन्ति । तदाहुर्न दीक्षितेनासन्द्यधिरुह्येति । उत्थिता ह खलु वा एतदहरागच्छन्ति । यद्वावादो दशममहस्तदेवोक्थानि । इयमधिरुह्येवोपेत्याहु । अन्तरिक्षसाच्येव वै श्रीरेव श्रिया उपासिरिति । वाणश्शतश्रीर्भवति (*v.l* वाणश्शततन्त्रिर्))— शतायुर्वै पुरुषश्शतेन्द्रियश्शतवीर्य —तस्यैवेन्द्रियस्य वीर्य-

स्यादरुद्धयै ।......अथो अवभृथादेवोदेत्य कार्यः । एवं वाणश्शतश्रीवाचः (?) कृत्स्नत्वायेति । तस्यैष सन्तानो—भूर्भुव स्वर्वदा वदा वदा वदी वदा वदोरुः पृथुस्सुगस्सुगन्तुः कर्मः करणः करः (om. in some MSS) करिष्यन्नैन्द्रीं वाचं बृहतीं विश्वरूपां शतायुषं प्रवद देव वाणेति । अथेन्द्रेणतया (so all MSS) चेषीकया वेतसशाखया चोल्लिखति मनो (*v.l.* मानो) ज्योतिरिति वाक् सत्यमिति मानो (*v.l.* मनो) भद्र इति. Also cf. DŚS XI.1.4.7 and ĀpŚS XXI.18.8-10.

1 A नीधति, B निदधाति, C निधति.

2 उदीचीनदेवत्य is not found elsewhere. It recurs in JB I.72 उदीचीनदेवत्या उद्गातारः.

3 A B उत्गातारः, C उतःगातारः.

4 A B उदि-, C उदिच्यैसारूह्येति.

5 C -रोहन्त्य.

6 नमस्ते...एधि is not found in Bloomfield's Vedic Concordance.

7 B हैवेके.

8 The mahāvrata is a prājāpatya day.

9 A B धिरोहोद्, C धीरोहोद्.

10 C वर्ण. On the description of the hundred-stringed vāṇa see Caland's note 1 on PB V.6.13.

11 So also in Auswahl §123. At JB II.404 Caland reads शततन्त्रिः without *v.l.*

12 A B C ववद.

13 C वदोरूः.

14 C वावं बृहतीं.

15 Cf. PB V.6.13 शततन्त्रीको भवति । शतायुर्वै पुरुषः शतवीर्यः.

16 इन्द्रणत is not found in the other Brāhmaṇas. In the parallel JB II.418 (425) we have इन्द्रेणत which occurs in PB XV.5.20. See Auswahl §123 note 4 and PB XV.5.20 note 3. इन्द्रणत means 'naturally bent'. Cf. इन्द्रप्रस्थ 'naturally flat'. It is rendered by स्वयंवक्रा in DŚS XI.1.8, as दैवेन नता by Dhanvin, as स्वयंनता in ŚŚS XVII.3.11.

17 A B C चैषीकया.

18 C वेतसनाखया.

19 उल्लिखति 'He grates, *i.e.* touches the strings with the plectrum (वेतसशाखया in JB, औदुम्बर्याः शाखया in Sāyaṇa on PB V.6.14)'. PB V.6.14 has different formulas प्राणाय त्वा, अपानाय त्वा, व्यानाय त्वा.

20 C इन्ति.

21 मनो ज्योतिः, वाक् सत्यम् and मानो भद्र occur in LŚS IV.1.7. See Over en uit het JB, p.42.

## २.४६

अथैता अन्याः परिमादः कुरुते[1] । अथ स्तुते । अथ शीर्ष्णाग्रे स्तुते ऽथ दक्षिणेन पक्षेणा[2]थोत्तरेणाथ पुच्छेनात्मनोत्तमेन[3] । तत् सलोमाय ।

शीर्ष्णोद्गाता[4] प्रतिपद्यत आत्मना होता । यां ह्य् एव प्राह[5] तया प्रतिपद्यते । अथ यद् अन्यां प्राहान्यया प्रतिपद्यते, विलोम तत् ।

अथ हैक आत्मनैवाग्रे प्रतिपद्यन्ते । तद् उ होवाच शाट्यायनिर् यथान्धो ऽरम् अच्छेत् तादृक् तद्[6] इति ।

अथ हैके [7]स्तुत्वैवोपावरुह्यैतद्[7] अहश् शस्यमानम्[8] ईक्षमाणा आसते । तद् उ होवाच शाट्यायनिर् ईश्वरः पापीयान् भवितोर् यस् तथा करोति । क्षत्रं वै साम[9] । विड् उक्थम्[10] । [11]उपर्य् एवासीत[11] । राजानम् एवाह्रियमाणं[12] प्रत्यवरोहेत्[13] । तथास्य राजा प्रत्यवरूढो भवति । तस्यै[14] प्रत्यवरोहो—

महो द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्[15] ।
पिपृतां[16] नो भरीमभिः[17] ॥

इति । ताम् एताम् आसन्दीम् उत्तरतः पर्याहृत्य निदधति[18] ॥४६॥

1 Here JB reads अथैता अन्या परिमाद कुरुते (Caland has क्रियन्ते PB V.6.11) after the description of the lute. Similar is the situation in JB II.404. But in PB V 6.11 the performance of the parimāds precedes the description of the lute See note 1 on PB V.6.11.

2 B C -ण-.

3 उत्तमेन 'lastly' (opp. अग्रे in शीर्ष्णाग्रे).

4 A B शीर्षेत्गाता, C शीर्ष्णोत्गाता

5 A B आह. Cf. प्राह in the next sentence अथ यदन्या प्राहान्यया प्रतिपद्यते.

6 C तत्.

7 C स्तुवैवोपावरूढेतद्.

8 C शस्यमनानम्.

9 Cf ŚBM XII.8.3.23, GB II.5.7.

10 A च्छस्त्रम्, B C च्छत्रम्. Cf. SB I.4 विट् शस्त्रम्.

11 C उपर्य्योवासीत.

12 B एवाह्रीयमाण, C एवाह्रीयमाण (!).

13 'He should descend from the seat in honour of the soma, that is being ushered in'.

14 C repeats प्रत्यवरूढो भवति तस्यै

15 B C मिमिक्षता

16 B पिवृतां.

17 RV I 22.13. It is not found in JS.

18 C निदयति (ध and य are often confused in Grantha script).

## २.४७

तद् आहुर् यद् विहृतम् एतद् अहश् शस्यते, विहृतासु स्तुध्वा[३][1] अविहृतासू[३] इति । विहृतास्व् इति ब्रूयात् । या एता राजन्यस्य देवतास् ताभिर् विहृतं भवति ।

तद् यद्[2] गायत्रीषु शिरो भवति, बृहतीषु च ककुप्सु च पक्षौ, द्विपदासु च पुच्छं, त्रिष्टुप्स्व् आत्मा, कथम् अतो विहृतं भवतीति । एतस्यात्मनः पञ्चविंशं[3] शतं[4] त्रिष्टुभो भवन्ति । ततो यच् छतम् आयुष् टत् । अथ याः पञ्चविंशतिः पुरुषस्य सः[5] । पञ्चेमाः पञ्चेमाः पञ्चेमाः पञ्चेमाश् चत्वारि प्राङ्गाणि[6] । आत्मा पञ्चविंशः[7] । स एष शतायुः[8] पुरुषः ।

तद् आहुर् यद् अन्यास् त्रिष्टुभस् संपूर्णाक्षरासु स्तुवत[9] इति । स ब्रूयात् त्रैष्टुभो[10] वै पुरुषस् त्रिष्टुब्योनिः[11] । तानीमानि पुरुषस्यान्यूनानि । तस्माद् न्यूनाक्षराः[12] । अथ यद् विषमेण समस् तेनो[13] संपूर्णाक्षरा इति ।

तद् आहुर् यत् पञ्चविंशः पुरुषः पुरुषस्यैतत्[14] स्तोत्रम् इत्य् आहुः[15] । अथ कस्माद् एतानि विषमाणि सामानि[16] क्रियन्ते[17] [18]पुरुषस्य सर्वताया[18] इति । स ब्रूयान्[19] मनो वै प्रजापतिः । प्रजापतिः पुरुषः । तस्यैषो अन्तर् आत्मा यद् एताः पञ्चविंशति स्तोत्र्याः[20] । अथो यथा पुरुषस्य केशा नखा लोमानि श्मश्रूणि तादृक् तत् । यद् एतानि विषमाणि[21] सामानि क्रियन्ते पुरुषस्य सर्वताया इति ॥४७॥

1 A स्तुद्ध्वा, B C स्तुर्द्ध्वा.

2 A B C यत्. The 'head' part of the mahāvrata stotra is chanted on gāyatrī verses. Cf. PB V.1.8 अर्कवतीषु गायत्रीषु शिरो भवति.

3 B पञ्चविंश.

4 पञ्चविंशं शतं means 125.

5 Cf. infra पञ्चविंशः पुरुषः......

6 प्रांग 'limb' is a new word. It recurs in JB III.349 पुरुषसंमितं ह खलु वा एतत् सत्त्रं यदेष पञ्चविंशतिरात्रः (no v.l.) । दश वै पुरुषस्य हस्त्या अंगुल्यो दश पाद्याश्चत्वारि प्रांगाण्यात्मा पञ्चविंशः and JB II.409 दश वै पुरुषस्य हस्त्या अंगुल्यो दश पद्याश् चत्वारि प्रांगाण्यात्मा पञ्चविंशः. Cf. SBM VI.2.1.23 चतुर्विंशो वै पुरुषो दश हस्त्या अंगुल्यो दश पाद्याश्चत्वार्यङ्गानि.

7 Cf. SBM X.1.2.8 स पञ्चविंश आत्मा and JB III.349 आत्मा पञ्चविंशः, आत्मैव पञ्चविंशः.

8 C इशतायुः.

9 C स्तुचत.

10 A B त्रुष्टुभो.

11 C -ब्योनिः. त्रिष्टुब्योनि is not found in MW, VPK and Index Védique.

12 C यूनाक्षराः.

13 =तेन+उ.

14 C स्यैतत्.

15 C आहः.

16 C समानि. But see below यदेतानि विषमाणि सामानि (no v.l.).

17 C क्रियन्त.

18 B C omits पुरुषस्य सर्वताया.

19 C ब्रूयात्.

20 So all MSS. All the three forms स्तोत्रिया, स्तोत्रीया and स्तोत्र्या are found in JB. Among these स्तोत्र्या is a new form. It has been emended to स्तोत्रिया in JB II.82 even by Caland! But it occurs in numerous places without any variant, *e.g.* at II.81, 90 (93), 103(106), 108(111), 111(114) bis, 124(126), 159(164), 184(189), 187(192) bis, 201(206), 235(240) bis, 252 (257) bis, III.321. Though there are cases where it has a v.l. स्तोत्र्या (v.l. स्तोत्रिया) II.119(123), 209(214), 233(238), स्तोत्र्या (v.l. स्तोत्रीया) II.316(321), the number of passages where it occurs without any variant is far greater. स्तोत्र्या is a genuine samprasāraṇa form and calls for no emendation.

21 A B C विषमानि.

## २.४८

तद् आहुर् यद्[1] बृहत्यायतनानि[2] पृष्ठानि[3] कथमुअतो बृहतीषु कृतं भवतीति । एतस्यात्मनो द्वापञ्चाशं शतं बृहतयो[4] भवन्त्य्[5] एका च ककुप्[6] । तेन बृहतीषु कृतं भवति। तेनो एव ककुप् [7]पृष्ठेभ्यो न[7] च्यवत इति ।

तद् आहुः[8] किंछन्दाः[9] पञ्चविंश स्तोम इति । पंक्तिछन्दा[10] इति ब्रूयात् । एतद् ध वै प्रत्यक्षं पञ्चविंशस्य स्तोमस्य छन्दो यत् पंक्तिः[11] । एतस्यात्मनस् सप्तत्रिंशं शतं पंक्तयो[12] भवन्त्य् अर्धपंक्तिश्[13] च । तेन [14]पंक्तिश् छन्दाः[14] । ता उ एव द्वानवतिर्[15] अतिछन्दसः । अतिछन्दा वै सर्वाणि छन्दांस्य् अभिभवति । तद् वा अस्य तत् सर्वाण्य् एव छन्दांस्य्[16] उपेतानि भवन्ति ।

तद् आहुः कथम् एतत् सर्वम् अहः पञ्चविंशं[17] भवतीति । संपदेति ब्रूयात्[18] । कथं संपदेति । पद्येति[19] नव[20] शीर्ष्णो[21] गायत्र्यः[22] । तासां सप्तविंशतिः पदानि । षद् छतं[23] पक्षयोर् द्वाचत्वारिंशत् पुच्छस्य[24] । तद् यानीमानि सप्तविंशतिश् शीर्ष्णः पदानि ततो द्वे आदाय षद् छत[25] उपदधति । अथ पञ्चविंशः[26] परिशिष्यते । ततो यच्[27] छतं

चत्वारस् त पञ्चविंशाः[२८] । अथ यान्य् अष्टाव् अतिरिच्यन्त तानि द्वाचत्वारिंशत्य्[२९] उपदधति । तौ द्वौ पञ्चविंशौ । पञ्चविंश एव पञ्चविंशम्[३०] । सर्वं पञ्चविंशं भवतीति ॥४८॥

1 A B C यत्

2 See note 5 on JB II.36

3 C पृष्ठानि.

4 So all MSS.

5 B C भवत्य.

6 The 'ātman' has 125 tristubhs (JB II.47 एतस्यात्मन पञ्चविंश शत त्रिष्टुभो भवन्ति), which are equal to 5500 syllables (a tristubh=44 syllables). The same number of syllables is made up by 152 brhatīs (36×152) and 1 kakubh (28).

7 C पृष्ठेस्मोनु.

8 A C आह.

9 C किछान्दा.

10 A B C पङ्क्तिछन्दा.

11 C पङ्क्ति.

12 C पङ्क्तयो.

13 C -पङ्क्तिश्. 137½ panktis=137½×40=5500 syllables.

14 C पङ्क्तिछन्दा.

15 C द्वारवतिर्. द्वानवति is not found in MW, VPK and Index Védique. Cf. Prākrit *bānaïn*, Hindi *bānwe*, Nepali *bānabe*, Lahndi *bānave*, Gujarati *bānuṃ*

16 B C छन्दास्य्.

17 Cf TB I.2.6.1 पञ्चविंशस्तोमो भवति and PB IV.10.5 note 1.

18 A C ब्रूयत्. सम्पदेति ब्रूयात् 'he ought to answer one ought to look only to the total' (Haug, AB II.37). Following Sāyana Keith (AB *ibid*) translates it as " 'by conversion' he should reply". The exact meaning is 'numeric concordance', cf. Prof Minard, Trois Enigmes sur les Cent Chemins I (Paris, 1949) p.73 §201.

19 RV III.55.14.

20 C नच

21 B शीष्णो, C शीष्णो

22 The 'head' of the mahāvrata-stotra is chanted in the gāyatra melody on nine verses.

23 A B च्छत, C छ्छने. The change of श् to छ् after ट् has its parallels in विपाट् छुतुद्रि RV (Macdonell, Vedic Grammar for Students §53a), विट् छस्त्रम् JB II.46.

24 C पक्षस्य.

25 C छ्छन. षट् छते 'in the 106 (pādas of the two wings' of the mahāvrata-stotra)'.

26 B C पञ्चविंश.

27 C यछ.

28 The hundred (pādas)=four pañcaviṃśas.

29 द्वाचत्वारिंशति loc. sg. 'in the 42 (pādas of the 'tail)'.

30 In the question कथमेतत् सर्वमहः पञ्चविंश भवति the neut. form पञ्चविंशम् is used, while in the answers the masc. forms (पञ्चविंश, पञ्चविंशा and पञ्चविंशौ) are employed. Hence the remark पञ्चविंश एव पञ्चविंशम्.

## २.४९

एष वाव यज्ञानां विपुवान् यद् अग्निष्टोमः । ते ये प्राञ्चो [१]हविर्धाना औपवसथात्[१] ते ऽपियन्ति । अथ य उत्तरे यज्ञक्रतवस्[२] सुत्यायां ते ऽपियन्ति । यत्[३] त्रिवृद्[४] बहिष्पवमानं ये त्रिवृत स्तोमास् तेन त ऽपियन्ति । यत् पञ्चदशान्य् आज्यानि[५] पञ्चदशो माध्यंदिनो ये पञ्चदशा स्तोमास् तेन ते ऽपियन्ति । यत्

सप्तदशानि पृष्ठानि सप्तदश आर्भवो[6] ये सप्तदशा स्तोमास् तेन ते ऽपियन्ति । यद् एकविंशम् अग्निष्टोमसाम य एकविंशा स्तोमास् तेन ते ऽपियन्ति । यद् एकविंशं सर्वे स्तोमा अभिसंपद्यन्ते तेन सर्वे स्तोमा अपियन्ति ।

अयम् एवाग्निष्टोमो यो ऽयं पवते। ते[7] ये प्राञ्चो [8]यज्ञक्रतवो ऽग्निस् ते[8] निदानेन । अथ य उत्तरे यज्ञक्रतव[9] आदित्यस् ते निदानेन । यदा वा अग्निर् उद्वायति[10] वायुम् एवाप्येति । यद् आदित्यो ऽस्तम् एति वायुम्[11] एवाप्येति[12]।तस्य[13] वा एतस्य[14] तथैव[15] वाग्निष्टोमस्य चतुर्विंशाति स्तुतशस्त्राणि[16]। एवं[17] चतुर्विंशातिः पुरोवातो दक्षिणतोवातः[18] पश्चाद्वात उत्तरतोवात ऊर्ध्वोवात[19] इति । प्राण एवाग्निष्टोमस्तोमः । ते ये प्राञ्चो यज्ञक्रतवो[20] वाक्[21] ते निदानेन। अथ य उत्तरे यज्ञक्रतवश्[22] चक्षुस् ते निदानेन—॥४९॥

1 A हविर्थज्ञा ओपवसथात्, B हविर्यज्ञादौपवसथात्. The nom. pl. प्राञ्च: qualifies the nom. pl. हविर्यज्ञाः.

2 C यज्ञक्रतवस्.

3 A B यं.

4 A C तृवृत्, B त्रिवृत्.

5 Cf. JB II.131-132(133-134) पञ्चदशान्याज्यानि भवन्ति.

6 B आर्भवा.

7 C omits ते.

8 A C यज्ञक्रतवोग्निस्तेग्नी.

9 C यज्ञक्रतव.

10 C ऊद्वायति.

11 A B C वायुर्. For the emendation of वायुरेवाप्येति to वायुमेवाप्येति cf. JUB III.1.1-7 एका ह वाव कृत्स्ना देवतार्धदेवता एवान्याः। अयमेव योऽयं पवते। एष एव सर्वेषां देवानां ग्रहः। स हैषोऽस्तं नाम। अस्तमिति हेह पश्चाद्ग्रहानाचक्षते। स यदादित्योऽस्तमगादिति ग्रहानगादिति हैतत्। तेन सोऽसर्वः ... अन्वग्निर्गच्छति [Mark JUB अनु√गम् 'to go out (as fire)' for JB उद्√वा]। तेन सोऽसर्वः। स एतमेवाप्येति (no v. l.).

12 C inserts यदादित्योप्येति after it.

13 B स्तस्य.

14 A B C एतस्या.

15 C तथैवन्.

16 There are twelve stotras and twelve śastras of the agniṣṭoma, each stotra (chanted by the udgātṛs) being followed by a śastra (recited by the hotṛ or one of his three assistants, the hotrakas—maitrāvaruṇa, brāhmaṇācchaṃsin and acchāvāka)—

| | |
|---|---|
| *prātaḥ-savana* | |
| 1 bahiṣpavamāna-stotra | 1 ājya-śastra (hotṛ) |
| 2 ājya-stotra | 2 praüga-śastra (hotṛ) |
| 3 ājya-stotra | 3 ājya-śastra (maitrāvaruṇa) |
| 4 ājya-stotra | 4 ājya-śastra (brāhmaṇācchaṃsin) |
| 5 ājya-stotra | 5 ājya-śastra (acchāvāka) |
| *mādhyandina-savana* | |
| 6 mādhyandina-pavamāna-stotra | 6 marutvatīya-śastra (hotṛ) |
| 7 pṛṣṭha-stotra | 7 niṣkevalya-śastra (hotṛ) |
| 8 pṛṣṭha-stotra | 8 niṣkevalya-śastra (maitrāvaruṇa) |
| 9 pṛṣṭha-stotra | 9 niṣkevalya-śastra (brāhmaṇācchaṃsin) |
| 10 pṛṣṭha-stotra | 10 niṣkevalya-śastra (acchāvāka) |
| *tṛtīya-savana* | |
| 11 ārbhava (*or* tṛtīya) pavamāna | 11 vaiśvadeva-śastra (hotṛ) |
| 12 agniṣṭoma-sāman (yajñāyajñīya) | 12 āgnimāruta-śastra (hotṛ) |

17 C एव.

18 B -वान.

19 C ऊर्ध्वावात पुरावात 'eastern wind', दक्षिणतोवात 'southern wind', पश्चाद्वात 'western wind', उत्तरतोवात 'northern wind', ऊर्ध्वोवात 'wind of the upper direction (ऊर्ध्वा दिक्)'. दक्षिणतोवात उत्तरतोवात and ऊर्ध्वावात are new to MW, VPK and Index Védique.

20 C यज्ञक्रतवो

21 A C वात् (त and क are confused in Grantha).

22 C यज्ञक्रतवश्

## २.५०

—यदा वै तूष्णीम् आस्ते प्राणम् एव वाग् अप्येति[1]। यदा स्वपिति प्राणम् एव चक्षुर् अप्येति[2]। तद् यद् एवंविद् वदति हविर्यज्ञैर् अस्य तद् इष्टं[3] भवति। यत् प्राणित्य् अग्निष्टोमेनास्य[4] तद् इष्टं भवति। यद् वीक्षत उत्तरैर् अस्य तद् यज्ञक्रतुभिर् इष्टं भवति। तद् यद् एवंविद् वदति यत् प्राणिति[5] यद् वीक्षत एतैर् हास्य[6] तत् सर्वैर् यज्ञक्रतुभिर् इष्टं भवति।

स एष समानप्रायणस्[7] समानसंबन्धनस्[8] संवत्सरः। तस्य मन एव प्रायणं, वाक् संबन्धनम्। [9]स एष संवत्सरो ऽग्निष्टोमान् एवाभिसंपद्यते। षड् अतिरात्रस्यातियन्ति, त्रीण्य् उक्थानि त्रिदेवत्यस् सन्धिः। त्रीण्य् आरम्भणीयस्याह्नो[10] ऽतियन्ति। अथ यत्र [11]ह क्व[11] चाभिप्लवस् सप्त ते ऽग्निष्टोमाः। षट्कृत्वः पृष्ठ्यम् उपयन्ति[12]। द्वयोष् षड् अतियन्ति द्वयोष् षट्। सो ऽग्निष्टोमः[13]। द्वयोष् षट्। तद् अमूनि षड् उपदधाति। सो ऽग्निष्टोमः। अग्निष्टोमो ऽभिजित्। नव[14] स्वरसाम्नाम् अतियन्ति। तद् अमूनि त्रीण्य् उपदधाति। सो ऽग्निष्टोमः। अग्निष्टोमो विषुवान्। प्रतीचां स्वरसाम्नां नवातियन्ति। पञ्चकृत्वः पृष्ठ्यम् उपयन्ति। द्वयोष् षड् अतियन्ति[15] द्वयोष् षट्। सो ऽग्निष्टोमः। एकस्य त्रीणि। तान्य् एषु नवसूपदधाति। सो ऽग्निष्टोमः। अग्निष्टोमो विश्वजित्। गोआयुषोष् षड् अतियन्ति। द्वादशाग्निष्टोमा[16] दशरात्रः। अग्निष्टोमो महाव्रतीयम्[17] अहः। षड् अतिरात्रस्यातियन्ति। तद् अमूनि षड् उपदधाति। सो ऽग्निष्टोमः। द्वादशकृत्वष् षोडशिनम् उपयन्ति। [18]सो ऽग्निष्टोमः। यद्य् उ वा अतिरात्रे षोडशिनम्[19] उपयन्ति[18], मोहयन्त्य् अमूं विराजस्[20] संपदम्। अतीमाम्[21] अग्निष्टोमसंपदं[22] रिच्यते। स ह सो[23] ऽनिधानो वज्रो हिनस्ति। अथ वा अनिधानो वज्रः। स एष समानप्रायणस् समानसंबन्धनस् संवत्सरः। तस्य मन एव प्रायणं, वाक् संबन्धनम्। स एष संवत्सरो ऽग्निष्टोमान् एवाभिसंपद्यते। संपदा हाग्निष्टोमायनं[24] भवति। उपाप्तान्य् उ तान्य् अहानि भवन्ति यानि संवत्सरे चित्रियाणि[25]। तेन हैतेनायनेनोभौ[26] कामाव् उपाप्नोति यश् चाग्निष्टोमायने यश् च मासि पृष्ठे ॥५०॥

॥ महाव्रतत्रयं[27] समाप्तम् ॥

1 Cf. JUB III.1.14 न वै स्वपन् वाचा वदति। सेयमेव प्राणमप्येति.

2 B आप्येति

3 B C इष्टं For genitivus agentis with the p.p.p. of √यज् (i.e. इष्ट) cf. JB I.4, 38,40,361, II.371 (Auswahl §161, p.207), TS II.6.1.5, II.6.9.3, ŚBM I.6.1.21, II.4.4, 17, V 2.3.9,10, V.5.4.14, V.5 5.11, XI.2.3.9,

XI.2.4.8,9, XI.2.5.5, XI.2.7.1-5, XI.4.4.7,12, XI.5.7.3, XIII.2.8.2, XIV.2.2.49, XIV.3.3.30, ṢB IV.1.14,16, IV.2.1, AB II.8.7-8, II.11.12-13, II.13.8-9, III.18.5, III.47.7, III.48.4, V.28.11, VI. 32.2 (=GB II.6.11), VI.33.11, KB V.2,4,7, XIX.6.

4 C अग्निस्तोमेनास्य.

5 A B C प्राणीति.

6 B ह्यास्य.

7 A C समानप्रायंण. समानप्रायण is not found in MW, VPK and Index Védique. It recurs in JB III.176 in contrast with समानोदयन.

8 B समानसंबन्धस्, C समानस्संबन्धनस्. समानसंबन्धन 'having a common connecting link' (Eggeling, ŚBM VII.5.2.62). MW's 'equally connected' is inappropriate here.

9 Hence onwards it is told how a year-long sacrifice becomes an agniṣṭomāyana on the basis of the totals (स एष संवत्सरो ऽग्निष्टोमानेवाभिसम्पद्यते । सम्पदा ह्यग्निष्टोमायनं भवति). The stotras and śastras of non-agniṣṭoma days which are over twelve (the usual number of stotras and śastras chanted on an agniṣṭoma day) are summed up and when a total of twelve or a number divisible by twelve is reached, they (*i.e.* the extra stotras and śastras) are said to constitute one agniṣṭoma or more as the case may be:

'This year (consisting of atirātras, agniṣṭomas, ukthyas and ṣoḍaśins) changes to agniṣṭomas. Six (stotra-śastras) of the (prāyaṇīya) atirātra are in excess[1] : three uktha(-stotra)s and the sandhi(-stotra) belonging to three deities (and hence counted as three stotras)[2]. Three (stotra-śastras) of the ārambhaṇīya day[3] are in excess. And wherever there is an abhiplava (ṣaḍaha) they are seven agniṣṭomas[4]. They perform the pṛṣṭhya (ṣaḍaha)s six times (during the first half of the year, once every month). Six (stotra-śastras) of the two (pṛṣṭhya-ṣaḍahas) are in excess, as also six (stotra-śastras) of the (other) two. That is an agniṣṭoma. Six (stotra-śastras) of the (last) two (pṛṣṭhya-ṣaḍahas, remaining from the six pṛṣṭhya-ṣaḍahas of the first half of the year, are in excess). Then he adds (उपदधाति) those six (stotra-śastras of the prāyaṇīya atirātra which were in excess). That is an agniṣṭoma.

---

1 ☞ The word 'excess' in the following lines denotes the number of stotra-śastras in excess of the twelve stotra-śastras of the agniṣṭoma.

2 AB IV.6 also makes three stotras out of the sandhi-stotra (Keith, Rigveda Brāhmaṇas Translated, p. 54). Also see Eggeling, ŚBM transl., pt.III p. xix, and p.12 note 5.

3 The ārambhaṇīya day has 15 stotras and 15 śastras according to PB IV.2.9 पंचदश स्तोत्राणि पंचदश शस्त्राणि.

4 Whilst the agniṣṭoma includes 12 stotras and 12 śastras, the ukthya sacrifice (see ŚBM transl. by Eggeling, pt.III p.xvi note 2) has three additional (uktha) stotras and śastras (see PB VIII.8.4 note 2) which in the four ukthya days of the abhiplava-ṣaḍaha make up 12 stotras and 12 śastras, *i.e.* one more agniṣṭoma. Cf. ŚBM XII.2.2.12 अभिप्लवः षडहः षड्ढ्यहानि भवन्ति...चतुर्णामुक्थ्यानां द्वादश स्तोत्राणि द्वादश शस्त्राणि अतियन्ति स सम्मोऽग्निष्टोम एवमु सप्ताग्निष्टोमाः सम्पद्यन्ते 'it is a six-day's abhiplava, because it consists of six days...Twelve stotras and twelve śastras of the four ukthyas are in excess—they make

The abhijit (day) is an agnistoma. Nine (stotra-śastras) of the (three) svarasāman (days preceding the visuvat day)[5] are in excess. Then he adds those three (stotra-śastras of the ārambhaniya day which were in excess). That is an agnistoma. The visuvat (day) is an agniṣṭoma (cf. PB IV.5.19). Nine (stotra-śastras) of the posterior (three) svarasāman (day)s (which immediately follow the visuvat day) are in excess. They perform the prsthya-(saḍaha) five times (during the second half of the year, once in each of the seventh, eighth, ninth, tenth and eleventh months). Six (stotra-śastras) of the two (prsthya-sadahas) are in excess (and) six (stotra-śastras) of the (other) two. That is an agnistoma. Three (stotra-śastras) of the (last) one (prsthya-sadaha are in excess). He adds these (three stotra-śastras) in those nine (stotra-śastras of the posterior svarasāman days which are in excess). That is an agnistoma. The viśvajit (day) is an agnistoma (cf. PB IV.5.19). Six (stotra-śastras) of the go- and āyus (day)s[6] are in excess. The daśarātra (rite[7]) consists of twelve agnistomas. The mahāvrata day is an agnistoma. Six (stotra-śastras) of the (udayanīya) atirātra are in excess. Then he adds those six (stotra-śastras of the go- and āyuṣ days which are in excess). That is an agniṣṭoma. They perform the sodaśin twelve-times[8] (during the year). That is an agniṣṭoma'.

10 C -हो.

11 A B कु क, C कु.

12 C मुपयन्ति.

13 All the MSS have the avagraha'

14 C inserts पवस्सप्त तेग्निष्टोमा after नव.

15 A B अतियति, C omits द्वयोष्षडतियन्ति.

16 C द्वादशाग्निष्टोमो. It inserts न्नवतियन्ति पञ्चकृत्वः पृष्ठ्यमुपयन्ति द्वयोष्षट् सोग्निष्टोम.

17 C महावृतीयम्.

18 B omits सोऽग्निष्टोमः ... . उपयन्ति.

19 A C षोडशीनम्.

20 C विराजिस्. For विराजस्संपद् see Auswahl §86 note 7 and cf KB II.3 विराड्सम्पन्न. The sodaśins in a year-long sacrifice—of which gavāmayana is the prototype—are being enumerated. The 12 sodaśins in the 12 prṣthya-ṣaḍahas have been given above. Ancient authorities differ on the question whether the sodaśin is per-

a seventh agniṣṭoma and thus the agnistomas amount to seven.'

5 It is noteworthy that PB IV.5.20 makes all the svarasāman days agniṣṭomas, while here all of them are taken to be ukthyas which is apparent from the excess of nine stotra-śastras in three svarasāmans. This difference is also noticed in ŚBM XII.2.1.6,7. While enumerating agniṣṭomas, ukthyas, sodaśins and sadahas in an year it gives two different calculations of agnistomas and ukthyas, the basis of difference being the performance of the svarasāman days either as ukthyas or as agniṣṭomas. See note 7 on JB II.7.

6 Go- and āyus days are ukthyas.

7 The daśarātra consists of a prṣṭhya-ṣadaha, three ukthva days called chandomas and an atyagniṣṭoma day termed avivākya.

8 Eleven ṣodaśins are included in eleven prṣṭhya-ṣadahas, one prṣṭhya-ṣaḍaha being performed every month except the last. The one remaining ṣodaśin occurs in the prṣṭhya-ṣadaha of the daśarātra in the twelfth month. Also see ŚBM XII.2.1.7.

formed during the atirātra or not. On it see Eggeling, ŚBM transl. pt.III pp.xviii-xix and Keith, Ṛigveda Brāhmaṇas Translated p.53. Here our Brāhmaṇa is not in favour of the performance of the ṣoḍaśins during an atirātra as is evident from its giving the evil consequences of doing so.

21 अति goes with रिच्यते.

22 अग्निष्टोमसम्पत् is new to MW. It occurs in JB I.237 only. See Caland, Auswahl §88 note 7 and Index Védique.

23 स ह स: occurs in JB I.243,312 passim, 313 passim, III.198. Also see note 17 on JB II.5. Verbally identical are the sentences occuring in the beginning of this paragraph.

24 अग्निष्टोमायन is new to MW and VPK. It occurs in BŚS XXVI.12 also.

25 C चित्रीयाणि.

26 B C -नोहै.

27 C महालक्ष्म समाप्तम्. The compounds महालक्ष्म and महाव्रतत्रय are not to be found in MW, VPK and Index Védique. Cf. त्रिमहाव्रत in ŚBM XII.1.3.23 and GB I.4.13. महाव्रतत्रय refers to the three great rites—the ārambhaṇīya, the viṣuvat and the mahāvrata (mentioned in JB II.8 and ŚBM XII.1.3.23).

## २.५१

द्वया[1] ह वै पूर्वे[2] ऋतव[3] आसुः —प्राणर्तवो[4] देवर्तवः[5] । अथेम एतर्ह्य्[6] ऋतव एव । प्राण एव वसन्त आस । वाग् ग्रीष्मः । चक्षुर्[7] वर्षाः । आर्द्रम्[8] इव वै चक्षुर्, आर्द्रा इव वर्षाः । श्रोत्रं शरत् । मनो हेमन्तः । या इमाः पुरुष आपस् स शिशिरः[9] । अथ देवर्तवः । वायुर् एव वसन्त आस । अग्निर् ग्रीष्मः[10] । पर्जन्यो वर्षाः । आदित्यश्[11] शरत् । चन्द्रमा हेमन्तः । या अमूर्[12] दिव्या आपस् स शिशिरः । स यस् स प्राणो[13] वसन्त आस, यो वायुर् वसन्तस्, सो ऽयम् एतर्हि वसन्तः । अथ या वाग्[14] ग्रीष्म[15] आस[16], यो ऽग्निर्[17] ग्रीष्मस्, सो[18] ऽयम् एतर्हि ग्रीष्मः । अथ यश् चक्षुर् वर्षा[19] आसुर्[20], याः पर्जन्यो वर्षास्, ता[21] इमा एतर्हि वर्षाः[19] । अथ[22] [23]यच् छ्रोत्रं[23] शरद् आस, य आदित्यश् शरत्, सेयम् एतर्हि शरत् । अथ यन् मनो हेमन्त आस, यश् चन्द्रमा हेमन्तस्, सो[24] ऽयम् एतर्हि हेमन्तः । अथ या इमाः पुरुष आपश् शिशिर आसुर्[25], या अमूर् दिव्या [26]आपस् स[26] शिशिरस्, सो ऽयम् एतर्हि शिशिरः ॥५१॥

1 A B C द्वाया. Mark the collective numeral.

2 पूर्वे 'in olden days'.

3 C ऋत.

4 C प्राणार्त्तवो. प्राणर्तु is new to MW, VPK and Index Védique. ChUp II.7.1 refers to the five organs of vitality or sensation, *viz.* प्राण, वाक्, चक्षुस्, श्रोत्र and मनस्, collectively as प्राणा: (pl.). Our text takes प्राणा: in the same sense.

5 C omits it. देवर्तु is not found in MW, VPK and Index Védique. On the interpretation of त्रियुगं पुरा in ŚBM VII.2.4.26 see Eggeling's note. Our text seems to go with the author of ŚBM in taking त्रियुगं पुरा as two independent adverbs.

6 अथ एतर्हि 'but now'.
7 A B C चक्षु॰.
8 B C आर्दम्.
9 A सशिरः.
10 A ग्रीष्मं.
11 A B C आदित्य.
12 C अमू
13 C प्राणे.
14 A B C वा.
15 C ग्रीष्मे.
16 A B C अस
17 C मि.
18 C से.
19 C वषा.
20 C आसीर्.
21 C त.
22 C अव.
23 C यवोत्र
24 C से.
25 C आसुर्.
26 C omits आपस्स.

## २.५२

त एते षड् ऋतवष्[1] षड् दिशः[2] । त एत ऋतवो[3] दिग्भिर् मिथुना—वसन्तेनेयं प्राची दिङ् मिथुना, ग्रीष्मेणेयं, वर्षाभिर् इयं, शरदेयं[4], हेमन्तेनासौ[5], शिशिरेणेयम् । तद् यथा पतिं[6] जाया अनिमेषम्[7] ईक्षेरन्न् एवम् एवैना एवंविदं दीक्षमाणम् ईक्षन्ते । तद् यद् दिग्भिर्[8] ईक्षितस्न् तस्माद्[9] दीक्षितः[10] । स दीक्षिष्य-माण[11] आदित्यम् उपातिष्ठत त्वं देवता दीक्षितासि[12] । सा दीक्षमाणस्य तेज इन्द्रियं वीर्यं यश [13]आदत्से । मा मे तेज इन्द्रियं वीर्यं यश[13] आदिथा॰ । तव दीक्षाम् अनु दीक्ष इति[14] ।

अथर्तून् अन्व् आरोहति ।
य ऋतव ऋतुभ्यो ऽध्य् आसन्
पुरा[15] सूर्याचन्द्रमसश्[16] च पूर्वे[17] ।
येभि.[18] प्रजानन्[19] प्रदिशो दिशश् च
तान् अन्व आरोहामि तपसा ब्रह्मणा च ॥

इति प्राणर्तून्[20] अन्व् आरोहति ।
य ऋतवश् चन्द्रमसो ऽधि पूर्व
ऋचं वाचं ब्रह्माणम् आबभूवुः[21] ।

इत्य् एवंविदं हय् आभवन्[22] ।
येभिः[23] प्रजानन् प्रदिशो दिशश् च
तान् अन्व् आरोहामि तपसा ब्रह्मणा च ॥

इति देवर्तून्[24] अन्व् आरोहति ।
य [25]एक ऋतुस् त्रय[25] ऋतवश् च
ये षट् [26]चतुर्विंशतिर् ऋतवो[26] ये
द्वादश सप्तदशान्य् उत विंशतिश् च
तान् अन्व् आरोहामि तपसा ब्रह्मणा च ।

इतीमान् ऋतून् अन्व् आरोहति । स एवम् एतैस् तैर्[27] ऋतुभिः परिगृहीतः । स यथा

तैर्[27] ऋतुभिः परिगृहीत एवम् एवानार्तस्[28] संवत्सरस्योदृचं[29] गच्छति । ऋतुर् ऋतुर् हैवंविदे[30] कल्पते ॥५२॥

1 C ऋतव.
2 Cf. GB II.6.12 ऋतवो वै दिशः प्रजननः.
3 A ऋतवे.
4 C omits it.
5 So in all MSS!
6 C पति.
7 C अग्निमेषम्.
8 A इग्भिर् (*lectio simplicior!*).
9 A B C तस्मा.
10 C दितः.
11 C द्रिक्षिष्यमाण.
12 Cf. AV XI.5.6 and GB I.2.1.
13 A haplologically omits it. आदत्से in all MSS. So also in JB II.64. Oertel, JBR p.35 wrongly reads आदः (MSS आदत्) and takes सा (MSS से, सो) with the next sentence.
14 This formula is to be added in the Vedic Concordance. C adds त after इति.
15 C पूरा.
16 Vedic Concordance सूर्याच् चन्द्रमसश्.
17 'In ancient times (पूर्वे) before the existence of (पुरा) the sun and the moon'.
18 A B C एभि.
19 Vedic Concordance प्रजानम्, but see further.
20 A प्रतानर्त्तून्, B प्रातानर्त्तून्, C ब्रतानभान्.
21 C आवभून्यः. Vedic Concordance does not give the correct reading.
22 C आहवत्. Cf. आबभूवुः in the previous line.
23 A B C एभिः.
24 C देवआन्.
25 C omits एक ऋतुस्त्रय. Cf. ŚBM III.4.4.17 and XI.5.4.11 त्रयो वा ऋतवः संवत्सरस्य.
26 C चतुर्विंशतिरुतवा.
27 A B C श्रैर्.
28 A C -नर्त्तस.
29 C -द्रृशचं.
30 A हेवंत्रिदे, C हैवाविदे.

## २.५३

[1]केशी ह दार्भ्यो दर्भपर्णयोर् दिदीक्षे[2] । अथ ह सुत्वा याज्ञसेनो हंसो[3] हिरण्मयो भूत्वा यूप उपविवेश । तं[4] ह केशी शुनीति[5] नाम्नाभ्युवाद[6] । स ह चुक्रोध—स्थविरो ऽस्मि[7] पञ्चालानां[8] राजा । स उ वै दीक्षितो ऽस्मि । को नु [9]माहैन् नाम्नैवाभिवदितुम्[9] इति[10] । स होवाच—मा क्रुधः[11] । अभिवदिता ते तेनास्मि, यद् अहम् एतस्यै[12] विशस् त्वत्पूर्वो राजासम् । अभिवदितो[13] वाव[14] ते तेनासि, यद् दीक्षितो ऽसि । [15]इष्टापूर्तस्य त्वम् अक्षितिं वेत्थ[15] । दीक्षाम्[16] अहं वेद । संप्रब्रुवामहा[17] इति । स होवाच—अग्निर् दीक्षितः[18] पृथिवी दीक्षा, वायुर् दीक्षितो ऽन्तरिक्षं दीक्षा, आदित्यो दीक्षितो[19] द्यौर् दीक्षा, प्रजापतिर् दीक्षितो मनो दीक्षा[20] । स दीक्षेत—यया दीक्षयाग्निर् दीक्षितस् तया दीक्षया [21]दीक्षे, यया[21] दीक्षया वायुर् दीक्षितस् तया [22]दीक्षया दीक्षे, यया[22] दीक्षयादित्यो दीक्षितस् तया दीक्षया[22] दीक्षे, यया[23] दीक्षया प्रजापतिर् दीक्षितस्[24] तया दीक्षया दीक्ष[25] इति ॥५३॥

1 This section as well as a major part of the following has been edited

by Caland in Auswahl §124 Cf. KB VII. 4, Over en uit het JB, p.40.

2 B ददीक्षे

3 C ह्रासो.

4 C ता.

5 B C निति.

6 B C -भ्युपाद.

7 C deletes स्मि.

8 B पाञ्चालानां.

9 A मारुहेयन्नाग्नेवाभि- , B मान्नाग्नेवाभि- , C मारिहेयन्नाग्नेवाभि-. अर्हेत् from √अर्ह्. Caland wrongly emends it to मेयनाग्नैवाभिवदितुम्.

10 A अति, C अर्हति. Caland's अर्हति has to be corrected.

11 C क्रध.

12 C एतव्यै.

13 =अभिवदिता+उ.

14 C वाप

15 C इष्टापूर्तस्यावमक्षितिमवेत्थ. A B अवेत्थ for वेत्थ.

16 C inserts आर्त्तस्यत्व after दीक्षाम्.

17 So all MSS. Analogous cases are cited by Prof. Renou, Monographie Sanskrites I p.6 §9, in the studies on the subjunctive.

The verbal compound स प्र √ह्रु is new to MW This compound is known only from the Jaiminiyas Auswahl §95, §115, JUB IV.11.3

18 After it C inserts नया दीक्षया.

19 A दीक्षितर्.

20 After it C inserts आर्त्तस्यत्वमक्षिति-मवेत्थ.

21 C दीक्षयेया.

22 C omits it.

23 After it C inserts दीक्षय.

24 C दीदितस्.

25 C दीक्षत. For these formulae see ĀpŚS X.10 6 and HirŚS X.10 (p.1037).

## २.५४

अथ हेतर[1] उवाच। ब्रह्मणे ददद्[2] ब्रूयाद्[2] ब्रह्मन्[3] मनस् ते ददानि, तद् अनेन निष्क्रीणानि[4], ब्रह्मन्न् इदं ददानीति—यद् दास्यन् स्यात्[5]। स यन् मनो ददाति—चन्द्रमा वै मनश्[6]—चन्द्रमसम् एवास्मै तद् ददाति। तद् यावच् चन्द्रमा न क्षीयते, तावद् अस्य तद् दत्तं न क्षीयते।

होत्रे ददद्[2] ब्रूयाद् धोतर् वाचं ते ददानि, ताम् अनेन निष्क्रीणानि[7], होतर् इदम् ददानीति—यद् दास्यन् स्यात्। स यद्[8] वाचं ददात्य्—अग्निर् वै वाग्[9]—अग्निम् एवास्मै तद् ददाति। तद् यावद् अग्निर् न[10] क्षीयते, तावद् अस्य तद् दत्तं न क्षीयते।

अध्वर्यवे[11] ददद्[2] ब्रूयाद् अध्वर्यो प्राणं ते ददानि, तम् अनेन निष्क्रीणान्य्[12], अध्वर्यो इदं ददानीति[13]—यद् दास्यन् स्यात्। स यत् प्राणं ददाति—वायुर् वै प्राणो—वायुम् एवास्मै तद् ददाति[14]। तद् यावद् वायुर्[15] न क्षीयते, तावद् अस्य तद् दत्तं न क्षीयते।

उद्गात्रे[16] ददद्[2] ब्रूयाद् उद्गातश्[16] चक्षुस् ते ददानि, तद् अनेन निष्क्रीणान्य्, उद्गातर्[16] इदं ददानीति—यद् दास्यन् स्यात्। स [17]यच् चक्षुर्[17] ददात्य्—आदित्यो वै चक्षुर्—आदित्यम् एवास्मै तद् ददाति। तद् यावद् आदित्यो न क्षीयते, तावद् अस्य तद् दत्तं न क्षीयते।

सदस्याय ददद्[18] ब्रूयात् सदस्यात्मानं त ददानि, तम् अनेन निष्क्रीणानि, सदस्येदं ददानीति—[19]यद् दास्यन्[19] स्यात्। स यद् आत्मानं[20] ददात्य्—आकाशो वा आत्मा—आकाशम् एवास्मै तद्[21] ददाति। तद् यावद् आकाशो न क्षीयते, तावद्[22] अस्य तद् दत्तं न क्षीयते।

होत्रकेभ्यो ददद् ब्रूयाद् धोत्रका[23] श्रोत्रं वो[24] ददानि, तद् अनेन निष्क्रीणानि[25], होत्रका इदं ददानीति—यद् दास्यन् स्यात्। स यच् छ्रोत्रं ददाति—दिशो वै श्रोत्रं—दिश एवैभ्यस् तद् ददाति। तद् यावद्[26] दिशो न क्षीयन्ते, तावद् अस्य तद् दत्तं न क्षीयते।

प्रसर्पकेभ्यो ददद् ब्रूयात् प्रसर्पका लोमानि वो[27] ददानि, तान्य् अनेन निष्क्रीणानि, प्रसर्पका इदं ददानीति—यद्[28] दास्यन् स्यात्। स यल् लोमानि ददात्य्[29]—ओषधिवनस्पतयो वै लोमान्य्—ओषधिवनस्पतीन्[30] एवैभ्यस् तद् ददाति। तद् यावद् ओषधिवनस्पतयो[31] न क्षीयन्ते, तावद् अस्य तद् दत्तं न क्षीयते।

सैषेष्टापूर्तस्याक्षितिः[32]। स य एवम् एताम् इष्टापूर्तस्याक्षितिं वेद, न हास्येष्टापूर्तं क्षीयते।

तद् उ ना आहुर् [33]वाग् वाव[33] दीक्षितो, वाग्[34] दीक्षा, वाग्[35] इदं सर्वं क्षियति[36]। वाचि वावेदं सर्वं क्षितम् इति वाव तौ तत् संप्रोचाते[37]।

तद् उ होवाच शाट्यायनी[38] रथन्तरेण दीक्षे, वामदेव्येन[39] दीक्षे, बृहता दीक्ष इत्य् [40]एव दीक्षेत[40]। अथ विमुञ्चेत बृहता विमुञ्चे, वामदेव्येन विमुञ्चे, रथन्तरेण विमुञ्च इति। सैषा दीक्षायै युक्तिश् च विमुक्तिश् च। स य एवम् [41]एतां दीक्षायै[41] युक्तिं च विमुक्तिं च वेद, वसीयान् एव भवति ॥५४॥

1 C हंतन
2 A B C -त्
3 C मश्चत्र
4 C निष्क्रीणामि.
5 C स्यान्.
6 C मनु.
7 C निष्क्रीणाति.
8 C यत्.
9 C वा.
10 A B C त्र.
11 C ध्वर्युवे.
12 A B निष्कृणान्य्, C रिष्कृणान्य्.
13 After it C inserts निष्क्रीणान्युत्पातरिवन्ददानीति.
14 C ददाती.
15 B C वायुन्.
16 A B C उत्
17 A यश्चक्षुर्.
18 A B C इत्.
19 B यद्दास्यन् (द्द is confused with द्द in the Grantha script)
20 A C आत्मानन, B आत्मानन्.
21 C त
22 A C तवद्.
23 A B धोतृका
24 A C वे
25 C निष्क्रीणाति.
26 C यवद्.
27 C वे.
28 B यद.
29 A ददान्य्
30 C -वानस्पतीन्.
31 A B ओषधी-, C ओषधीपनस्पतयो.
32 A सैषो-, C -स्याक्षीति.
33 A वाग्वा, C वाश्चव.
34 C वग्.
35 C वान्.
36 A B क्षीयति, C क्षायति.

37 A समोचते. Auswahl §124 ends here.

38 A B C शाख्यायनि.

39 A B C वामदेव्येन.

40 C एवन्दीक्षन.

41 C एताभीक्षावै.

## २.५५

हस्त्वाशया[1] आलुकेयो[2] दन्तालस्य धौम्यस्यान्तेवास्य्[3] आस । अथ ह दन्तालो[4] धौम्यस्[5] त्रयं वेदम् आप्रपदं[6] विदां चकार । तस्माद् ध सामवेदम् अनूच्य व्याजहार—संवत्सराय दीक्षिष्य इति । अथ ह स्म ततः पुरो विपृच्छमानाश्[7] [8]चरन्ति—संवत्सराय[8] दीक्षिष्यामह[9] इति । अथो ह स्म[10] समवसायान्योऽन्यस्य वरणम् आक्रोशमाना[11] निभृत्यम् अनुपृच्छन्त[12] आसते[13] । ते ह स्म यावन्तस् संपादयन्ति, ते ह स्म दीक्षन्ते । शश्वद् धैषा तद् आशीर् एव । तत् सत्रं भवति, यत् तम् एव ब्राह्मणं कृत्वोत्तिष्ठन्ति येनाब्राह्मणोक्तेन[14] सह दीक्षन्ते । तस्माद् अब्राह्मणोक्तेन सह[15] दीक्षेत[16] । तस्य ह स्मास्य राजन्यबन्धोश्[17] शार्दूलाजिनं[18] मणिं हिरण्यम् उपावहितं भवति । तद् ध स्म श्रोत्रियायोपप्रहित्याह—संवत्सराय[19] दीक्षिष्ये[20], ऽनु मा शाधीति । तस्मै ह स्म[10] राजन्यबन्धवे वक्तव्यं मन्यन्ते ॥५५॥

☞ This section and a part of the next has been edited in Auswahl §125.

1 A हस्त्वाशका.

2 He is mentioned as a king in JB I.234 (Auswahl §87) and JUB III.40.2 (in a vaṃśa-list).

3 A B धौम्म्यस्या-, C सौम्यस्या-. In the next line, however, all the MSS have धौम्य-.

4 A B C तन्दालो.

5 A धौम्म्यस्.

6 आप्रपदं is not found elsewhere in any Brāhmaṇa. Cf. AĀ II.1.4 with Keith's note on प्रपद.

7 A B C वपृच्छमानाश्. अव√प्रछ् is new to MW, VPK and Index Védique. Following Caland, विपृच्छमानाः (*lectio simplicior*) has been retained in the text. वि√प्रछ् is not found in the other Brāhmaṇas, though it occurs as early as the RV.

8 A चरन्त्यसंवत्सराय.

9 C दीक्षस्यामह.

10 C स्मा.

11 A B आक्रोशनमा, C आक्रोशमा.

12 C अनुप्रच्छन्त.

13 Cf. BŚS XVI.13 (quoted in Auswahl §125) तद्ध स्मैतत् पूर्वे संवत्सरं समवसायासतेऽन्योऽन्यस्यानूक्तं च मानुषं च विजिज्ञासमानाः.

14 C येनाब्राह्मणानाक्तेन.

15 C सतह.

16 C दीक्षत.

17 C राजन्यबन्धो.

18 C शामूलाजिन. Caland reads शामूलाजिन which occurs twice in the Karmānta-sūtra of Baudhāyana XVIII 25. शामूलाजिन is new to MW and is not found elsewhere in any Brāhmaṇa. शार्दूलाजिन is also new to MW, VPK and Index Védique. शार्दूलाजिन may be a *lectio simplicior*, suggested by the tigerskin (शार्दूलचर्मन्) used in the sacrifice. But it is supported by our best MSS.

19 A B सवत्साराय, C समवत्सराय.

20 C दीक्षिष्यो.

## २.५६

स ह तथैव पल्ययमानस्[1] सोमशुष्मं[2] सात्ययज्ञिम्[3] आजगाम । तं होवाच—प्राचीनयोग्य, संवत्सराय दीक्षिष्ये। भगवो[4] ऽनु नश्[5] शाधीति। तथेति[6] तं ह वदन्न् अभिराधयां चकार । तं होपेयाय । तस्मै यदेमां क्लृप्तिं प्रोवाचाभ्यूहम् अनुजगौ प्रस्तावप्रतिहारान् विदधाव्[7] अथ हैनम् अनुशशास । अयं[8] वाव संवत्सर इति होवाच। तस्यायम् एव देवयानः पन्था, इमे वर्तन्याव्, इयं गतिर् इति । स यद् एतद्[9] एवं वेद, अनार्त एवं संवत्सरस्योदृचं गच्छति[10] । पुरुषो वै प्रजापतिः । प्रजापतिस् संवत्सरः[11] । स यो ह पुरुषो, य एवायम् अन्तरिक्ष आकाश, एष एव स पुरुषः। तद् [12]यद् इश्वद्[12] अन्तरिक्षे न रमते पूर्णत्वैतन्[13] न रमते । अथो यद् अस्मिन् सर्वस्मिन् अन्तर् ईक्षते[14] तस्माद् अन्तरिक्षम् । अथो यद् इदं सर्वं युते तस्माद् वायुः । अथो यद् इदं सर्वं वाति[15] तस्माद् वातः । तस्यैतस्याकाशस्यात्मा[16] दसुमूढो[17] यद् असाव् आदित्यः । स एष[18] आदित्ये पुरुषः । अथ[19] यत् ततः[20] पर आकाशस् तस्यैष आत्मा समुमूढो[21] यच् चन्द्रमाः । स एष चन्द्रमसि पुरुषः । स न नाना मन्तव्य इति ह स्माह शाट्यायनिः[22] । य एवायं चक्षुषि पुरुष, एष[23] एवादित्य, एष चन्द्रमसीति । तम् अनयैव पुरुषविधयाप्नोति ॥५६॥

1 A पल्यायमानस्.

2 B सोमशूष्मं.

3 A सात्ययज्ञम्, C सत्ययज्ञिम्. He is mentioned as the teacher of Hṛtsvāśaya Āllakeya in JUB III.40.2.

4 C भगो. Caland inadvertently takes भगवो with the previous sentence.

5 A नाश्.

6 तथेति is not found in Caland's text.

7 A B C विदथाव्.

8 C अयम.

9 C omits it.

10 A B C गच्छन्ति. Here ends Auswahl §125.

11 Cf. GB I.5.3 पुरुषो वाव संवत्सरः.

Hence onwards the various parts of the human body are correlated to the year-long sacrifice. It may be noted that while our Brāhmaṇa indulges in digressions, GB I.5.3 and ŚBM XII.2.4.10f take up the subject-matter of §57 (end) and §58.

12 A तद्यद्दशद्, B तद्यदृश्वद्, C तद्यदृश्यद्.

13 So all MSS. The reading is dubious. Cf. PB XV.12.5 अन्तरिक्षेणेदं सर्वं पूर्णं.

14 All MSS have इक्षते, which may be the original reading. For other etymologies cf. JUB I.20.4 तद्यदस्मिन्निदं सर्वमन्तस्तस्मादन्तर्यक्षम्। अन्तर्यक्षं ह वै नामैतत् । तदन्तरिक्षमिति परोक्षमाचक्षते, PB XX.14.2 अन्तरेव वा इदमिति तदन्तरिक्षस्यान्तरिक्षत्वम्, ŚBM VII.1.2.23 सह हैवेमावग्रे लोकावासतुः। तयोर्वियतोर्योऽन्तरेणाकाश आसीत् तदन्तरिक्षमभवत्। ईक्षं हैतन्नाम । ततः पुरान्तरा वा इदमीक्षमभूदिति तस्मादन्तरिक्षम्.

15 A B C वातेति.

16 C तस्यैषस्या-.

17 A दसमूढो. Is it असंमूढो (from √मुह्)?

18 C एव.

19 C य for (ऽ)थ.

20 B C तः.

21 A B समुमूढो, C समामुमूढो. Is it संमूढो? Cf. note 17.

22 A शाट्यायनि.

23 A ए.

## २.५७

प्राण एव प्रायणीयो ऽतिरात्रः[1] । प्राणो हीदं सर्वं [2]प्राणेत । तद्[2] यत् प्राणेत तस्मात् प्राणः । वाग् एवारम्भणीयम्[3] अहः । वाचा हि[4] सर्वस्[5] संवत्सरस् सर्वे यज्ञक्रतव आरब्धाः । तस्माद् आरम्भणीये ऽहन् सर्वाणि रूपाणि क्रियन्ते । सर्वाणि ह[6] रूपाणि वाचि । अयम् एको ऽभिप्लवो ऽयम् एको [7]ऽयम् एको[7] ऽयम् एकः । तस्यास्याभिप्लवस्येदं[8] प्रथमम् अहः । तस्येदम् एव प्रातस्सवनम्, इदं [9]माध्यंदिनं सवनम्, इदं तृतीयसवनम् । इदम् एव द्वितीयम् अहः । तस्येदम् एव प्रातस्सवनम्, इदं माध्यंदिनं सवनम्, इदं तृतीय-सवनम् । इदम् एव वैरूपं तृतीयम् अहः । तस्येदम् एव प्रातस्सवनम्, इदं [10]माध्यंदिनं सवनम्, इदं तृतीयसवनम्[10] । इदम् एव वैराजं चतुर्थम् अहः । तस्यदम् एव प्रात स्सवनम्, इदं[11] [12]माध्यंदिनं[13] सवनम्, इदं तृतीयसवनम्[12] । इदम् एव शाक्करं पञ्चमम् अहः । तस्माद् अनेनोपसंगृह्य[14] शक्नोति[15] । तस्येदम् एव प्रातस्सवनम्[16], इदं माध्यंदिनं सवनम्, इदं तृतीयसवनम् । इदम् एव रैवतं षष्ठम् अहः । तस्माद् [17]अनया प्राश्नाति[17] । तस्येदम् एव प्रातस्सवनम्, इदं माध्यंदिनं सवनम्, इदं[19] तृतीयसवनम् । एवम् अस्याभिप्लवस्यैवम् अस्यैवम्[18] अस्य । अयम् एवात्मा पृष्ठ्यः । इम एव नव[19] प्राणाः । त्रिवृत्[20] प्रायणीयम् अहर्, यत् प्राणा इदं सर्वं प्राणेत[21] । तद् यत् प्राणेत[21] [22]तस्माद् अप्य् एतत्[22] प्रायणीयम् अहः । इमा एव ग्रीवाः[23] पञ्चदशम् [24]अहः । ओजो[24] वै वीर्यम् । ग्रीवा ओजः[25] । वीर्यं पञ्चदशः । तस्मात् पशवो ग्रीवाभिर् भारं वहन्ति[26] । अष्टाव् इमे जत्रवो, ऽष्टाव्[27] इम, ऊर्ध्वौ जत्रुस्[28] सप्तदशः[29] । तद् एव सप्तदशम् अहः । इदम् एवोदरम् एकविंशम् अहः । सर्वे वै स्तोमा एकविंशम् अभिसंपन्नाः । सर्वम् अन्नाद्यम् उदरे[30] प्रतिष्ठितम् ॥५७॥

1 Cf. AB I.7 प्राणो वै प्रायणीय . Oertel, JBR p.3, suggests a connection of प्राण with प्र√नी, in which case प्राणेत may be emended to प्रणेता. For the connection of प्र√नी with प्राण add the following references to those already given by Oertel—ŚBM XII.9.1.14 यद्दै प्राणेनान्नमात्मन् प्रणयते तत् प्राणस्य प्राणत्वम्, SBM X.5.2.14 एष उ -एव प्राणः । एष हीमाः सर्वाः प्रजाः प्रणयति.

2 C प्राणेत'द्.

3 C एतवारम्भणीयम्.

4 A omits it.

5 C एष.

6 C हि.

7 Omitted in C.

8 C -दा.

9 C omits up to तृतीयसवनम्[12].

10 A leaves out ध्यदिन सवनमिद तृतीय-सवनम्.

11 A इद.

12 A omits माध्यदिन सवनमिद तृतीयसवन.

13 B माध्यदिन.

14 C -सम्प्राह्य.

15 C शक्नोमि. See note 18 on JB II.1.

16 C omits -स्सवनम् इदं.

17 A अनेनोपसंगृह्य शक्नोति (dittography).

18 C omits अस्यैवम्

19 C inserts तमिदमेव रैवन षष्ठमहस्तस्माद-नेनोपसंगृह्या.

20 A B C त्रृवृत्. त्रिवृत् 'ninefold' and hence connected with the nine prāṇas.

21 A B प्रायणत, Oertel (JBR p.3) प्राणेत.

22 C तस्माद्यप्येतत्.

23 C ग्रीवः.

Cf. SBM XII.2.4.10-12 ग्रीवाः पञ्चदशः। चतुर्दश वा एतासां करूकराणि, वीर्यं पञ्चदशम्। तस्मादेताभिरण्वीभिः सतीभिर्गुरुं भारं हरति। तस्माद् ग्रीवाः पञ्चदशः॥ उरः सप्तदशः। अष्टावन्ये जत्रवोऽष्टावन्य उरः सप्तदशम्। तस्मादुरः सप्तदशः॥ उदरमेकविंशः। विंशतिर्वा अन्तरुदरे कुन्तापान्युदरमेकविंशम्। तस्मादुदरमेकविंशः.

24 C अहरोरोजो.

25 C आजः.

26 C विहन्ति.

27 A B अष्ठाव्.

28 C जतृस्.

29 A सप्तः.

30 C उदारे.

## २.५८

त्रयोदशेमाः[1] परिशवस्[2], त्रयोदशेमा, अण्डपरिशुस्[3] सप्तविंशी। तद् एव त्रिणवम् अहः। त्रयस्त्रिंशद् इमानि पृष्टिकाण्डानि[4] सह किंकालुकाभिः[5]। तद् एव त्रयस्त्रिंशम् अहः। अयम् अभिजिद् अयं विश्वजिच् छुक्लं कृष्णं कनीनिका। त इमे त्रय स्वरसामान, इमे त्रयो[6], ऽयं विषुवान्। [7]प्राणापानाव् एव[7] गोआयुषी। इम एव दश प्राणा दशरात्रः। मन एव महाव्रतीयम्[8] अहः। उदान[9] एवोदयनीयो ऽतिरात्रः।

त एते दश प्राणा[10] दश स्तोमा, दश छन्दांसि। इमे ह सप्त मुख्याः प्राणा, द्वाव् अवाञ्चौ, नाभ्यां दशमः। इमे ह पृष्ठ्यस्य षडहस्य स्तोमाः[11]। छन्दोमाः पञ्चविंशः[12]। चतुर्धा[13] इमान्य् उ ह सप्त चतुरुत्तराणि छन्दांसि सद्विपदाविराडतिच्छन्दाः[14]। प्राण एव गायत्री, चक्षुषी उष्णिक्ककुभौ, श्रोत्रं जगती, वाग् अनुष्टुब्[15], मनो बृहत्य्, आत्मा पंक्तिर्, बलं त्रिष्टुप्। प्रतिष्ठा[16] द्विपदा, मांसानि विराड्, शरीराण्य् अतिच्छन्दाः। तेषाम् एषां सप्तानां चतुरुत्तराणां छन्दसां[17] द्वादशैकविंशास्[18] संपद्यन्ते॥५८॥

1 C -मां.

2 A B पशवस्. परिशु is a doublet of पर्शु with the svarabhakti vowel -*i*, and need not be emended. Cf. svarabhakti in अण्डपरिशु. परिशु is new to MW, VPK and Index Védique.

3 No v.l. अण्डपरिशु or its doublet *अण्डपर्शु are not found in MW, VPK and Index Védique. See GB I.5.3 and cf. ŚBM XII.2.4.13f पार्श्वे त्रिणवः। त्रयोदशान्याः पर्शवस्त्रयोदशान्याः पार्श्वे त्रिणवे, तस्मात् पार्श्वे त्रिणवः॥ अनूकं त्रयस्त्रिंशः। द्वात्रिंशद्वा एतस्य करूकराण्यनूकं त्रयस्त्रिंशम्। तस्मादनूकं त्रयस्त्रिंशः॥ अयमेव दक्षिणः कर्णोऽभिजित् (henceafter the passage differs greatly from our text) ........उदान एवोदयनीयोऽतिरात्र उदानेन ह्युद्यन्ति. In this passage the word अण्डपर्शु of our text is replaced by पार्श्वे. पार्श्वे might well be a malapropism for पर्शु, which was collaterally used for पृष्टि. In strict anatomical phraseology, पृष्टि and पर्शु must have been distinguished. Eggeling points out (ŚBM transl. pt.V p. 164 note 2) that the term पृष्टि seems to be invariably used with the रेतःसिच् bricks. From this we might infer that पृष्टि is equivalent to our अण्डपर्शु, अण्ड being used to denote 'testicles' as well as 'semen virile' (रेतः).

4 A B पृष्ठिकाण्डानि, C पृष्ठिकान्धानि. पृष्टिकाण्ड is not found in MW, VPK and Index

Védique. Cf. पृष्टीकुण्डीलानि in the parallel GB I.5.3 (पृष्टिकुण्डलानि ?).

5 C किकालकामि.. किकाल(ल)का is new to MW, VPK and Index Védique. Does it correspond to अनूक 'spine' in the parallel GB I 5.3? Compare कंकाल 'skeleton'. It may refer to the vertebrae

6 These are the three posterior svarasāman days.

7 C प्राणापानावैव.

8 C महाप्रतीयम्.

9 C ऊदान.

10 C प्रा.

11 C स्तोमाच्.

12 B C पञ्चविशा.

13 A B C चतुर्थो. For the four items see note 15.

14 C omits स-

Together with the dvipadā, virāj and aticchandas the seven caturuttara metres constitute four items.

15 C अनुष्टुम्

16 C पृष्ठा.

17 C छन्दासां.

18 12×21=24 (gāyatrī)+28 (uṣṇih, kakubh)+48 (jagatī) +32 (anuṣṭubh), 36 (bṛhatī) +40 (paṅkti) +44 (triṣṭubh).

## २.५९

गायत्र्या उष्णिहो ऽनुष्टुभिश् चतुरशीतिर् अक्षराणि। ते चत्वार एकविंशाः। पंक्तेश् च त्रिष्टुभश्[1] च चतुरशीतिर् अक्षराणि। ते चत्वार एकविंशाः। बृहत्यै च जगत्यै च चतुरशीतिर् अक्षराणि। ते चत्वार एकविंशाः। अथ [2]त्रयाणां छन्दसां[2] दशशतम्[3] अक्षराणि। विंशत्यक्षरा द्विपदा। त्रिंशदक्षरा विराट्। षष्ठ्यक्षरातिच्छन्दाः[4]। तानि दशशतम् अक्षराणि संपद्यन्ते। ततो द्वे आदत्त। अथ द्वादश[5] त्रिवृतम् संपद्यन्ते। तान् इमान्[6] द्वादश त्रिवृतो द्वादशस्यैकविंशेषूपदधाति[7]। ते[8] द्वादश सत्रिंशिनो मासास् संपद्यन्ते। तद् एतच्[9] छन्दांसि त्रिवृतं चैव स्तोमम् अभिसंपद्यन्ते ॥५९॥

1 B त्रिष्टुभिश्.

2 C त्रयाणा छन्दसा.

3 दशशतम् '110'.

4 C षष्ठ्यक्षातिछान्दाः.

5 A B C द्वादशे.

6 A B C इमां.

7 A B C द्वादशस्येक-. Twelve trivṛts (12×9=108) are added to 12×21 giving a total of 360, *i.e.* twelve months of 30 days each.

8 C स.

9 A B C एतच्छ.

## २.६०

एकविंशं च वा पञ्च प्राणं चाग्नीश् चादित्यं च। अथ ये द्वे अक्षरे ते बृहद्रथन्तरे, ते अहोरात्रे[1]। सो ऽर्धमासस्[2] स मासस्[3], स [4]ऋतुस्, स[4] संवत्सरः[5]। तद् आहुर् यत् प्राणाश्[6] छन्दांसि[7] छन्दांसि स्तोमा[8] इत्य् आहुः, कथं[9] यजमानः[10] प्राणैश्[11] छन्दांस्य्

अप्येति। छन्दोभि स्तोमान्, स्तोमैर् बृहद्रथन्तरे, बृहद्रथन्तराभ्याम् अहोरात्रे[12], अहोरात्राभ्याम्[13] अर्धमासम्[14], अर्धमासेन मासं[15], मासेनर्तुम्[16], ऋतुना संवत्सरम्। कुतस् संवत्सरो[17] जायते, क्व प्रतिष्ठित[18] इति। स विद्याद्—अहम् एव संवत्सरो ऽस्मि, मयि प्रतिष्ठित इति। एवंविदो ह वाव[19] संवत्सरो जायत, एवंविदि प्रतिष्ठितः।

अथो आहुर्—आदित्य एव संवत्सरः। एतं हि सर्वा श्रीस्[20] सर्वं यशस् सर्वे देवास्[21] समेतास्[22], तस्माद् आदित्य[23] एव संवत्सर[24] इति। तस्य यद्[25] भाति तत् संवद्[26], यन्[27] मध्ये कृष्णं मण्डलं[28] तत् सर इत्य् अधिदेवतम्[29]। अथाध्यात्मम्[30]। अयम् एव संवत्सरो यो ऽयं चक्षुषि पुरुषः। तस्य यच् छुक्लं तत् संवद्[31], यन्[27] मध्ये कृष्णं मण्डलं तत् सरः। अथो आहुर्—आदित्य एव संवच्. चन्द्रमास् सरः। तम् एष सरति। तं[32] पौर्णमास्याम् आप्नोतीति। तद् उ वा आहुः—प्राण एव संवद्[33], वाक्[34] सरः। एताभ्यां हि समश्नुत इति।

तस्य वा एतस्य संवत्सरस्याग्निष्टोमसामान्य् एव देवयानः[35] पन्थाः—॥६०॥

1 C अहोरात्र.
2 C यंमासास्.
3 A B C मसस्.
4 A B C ऋतु.
5 A B C सवत्सवत्सरस्.
6 A B C प्राणा.
7 A omits it.
8 C तोमा.
9 C क.
10 A यजमा, B C यजमान.
11 A B प्राणैच्, C प्राणै.
12 C अहोरात्रो.
13 C -भ्यम्.
14 A B C अर्धमास
15 C मास.
16 C मासेनकक्रम्.
17 A B सवत्सरे. Cf. further एवंविदो ह वाव सवत्सरो जायते.
18 A B C पतिष्ठित.
19 C वा.
20 A श्रीरम्, C श्रीस्.
21 A C देवा.
22 Cf. JB II.29 तां हि सर्वे देवास्सवान्ताः (with note).
23 A आदित्य.
24 After it C adds एत हि सर्वा श्री सर्वं यशस्सर्वे देवास्समेतास्तस्मादादित्य एव संवत्सर.
25 A B C यत्.
26 A B C सपद्.
27 A B C यम्
28 C मण्ड.
29 A अधिदेवतम्. अधिदेवतम् is of greater frequency than अधिदैवतम्. Cf. JB II.28.
30 A अधा-, C अथध्यात्मम्मम्.
31 A सम्पद्
32 C र.
33 A सविद्.
34 C वान्.
35 C देवयानम

## २.६१

—तानि वा एतानि रौहिणकानि[1] नाम[2]। एतैर् वै देवा स्वर्गं लोकम् आरोहन्[3]। यद् अरोहंस्[4] तस्माद् रौहिणकानि[5]। तस्माद् वयम् अन्वहम् एवाग्निष्टोमसामानि कुर्मः।

अथ वर्तन्यौ बृहद्रथन्तरे[6]। एताभ्यां[7] ह वा एष एतद्[8] वर्तते। तस्माद् वयम्

अतिरात्र उभे बृहद्रथन्तरे कुर्मः—कृत्स्नं नस्[9] साम युक्तं यज्ञं वहत्[10], कृत्स्नेन साम्नोदृचम् अश्नवामहा[11] इति। अथ गतिः। [12]यश् चैवासाव् आदित्ये[12] पुरुषो यश् चायम् अध्यात्मन् तद् एतत् प्रजापत्ययनम्[13] इत्य् एवोपासितव्यम्। एतेन वा अयनेन प्रजापतिर् इमाम् ऋद्धिम् आर्ध्नोद्[14] इमां व्यष्टिं[15] व्याश्नुत। तद् याम् एव प्रजापतिर्[16] ऋद्धिम् आर्ध्नोद् यां व्यष्टिं[15] व्याश्नुत, ताम् एवर्द्धिम् ऋध्नोति तां व्यष्टिं[15] व्यश्नुते य एवं वेद ॥६१॥

1 C राहिणकानि.
2 C राम
3 No v.l. but अरोहन् in the next sentence.
4 C अरोहन्. See note 3.
5 Cf. the parallel JB II.14.
6 A बृहद्रथन्तरेण.
7 A ताभ्या.
8 C एत.
9 A C न.
10 So all MSS. For similar forms see Prof. Renou, Monographies Sanskrites I p.5 (bottom) on the subjunctive, and Caland, ŚBK introd. I p.44.
11 C अश्नवामहा.
12 A यश्चैवासावावादित्ये, B यश्चैवासावावादित्यो, C यचैवासावावादित्ये.
13 प्रजापत्ययन is new to MW, VPK and Index Védique. BŚS (index) has प्रजापतेरयनम्.
14 C -त्
15 A B C व्युष्टि.
16 A C प्रजापति, B प्रजापतिः.

## २.६२

एष वाव दीक्षितो य एष तपति। स एष इन्द्रियं[1] ज्यैष्ठ्यं[2] श्रैष्ठ्यम् अभि दीक्षितः। तस्य ये ऽर्वाञ्चो रश्मयस् तानि श्मश्रूणि[3], य ऊर्ध्वास् ते केशाः। अहोरात्रे एव कृष्णाजिनस्य रूपम्। अहर् एव शुक्लस्य रूपं, रात्रिः कृष्णस्य। अथ यद् एतन् मण्डलं[4] ता आपस् तद् अन्नं तद् अमृतम्। तस्मिन्न् एतस्मिन्[5] मण्डले तेजोमयश्[6] छन्दोमयः[7] पुरुषः। स[8] प्राणस्, स इन्द्रस्, स प्रजापतिस्[9], स दीक्षितः। तद् एतद् दीक्षयैव संगृहीतम्। तत आभ्यः प्रजाभ्यो ऽन्नाद्यं विसृजते। तस्येमा एव दिशः पत्न्य आसन्। तं हेमास्[10] तिस्रो दिशो ऽतिचेरुः[11]। इयं हैवास्यानुव्रततमास[12] यं[13] दक्षिणा दिक्। तस्माद् एष एताम् एवाभ्युपावर्तते[14]। यद्य् अप्य् उत्तरत उदेत्य् अथैताम् एवाभ्युपावर्तते[15]। तस्माद् यास्य प्रिया जाया[16] स्यात् तां दक्षिणार्ध्यां[17] कुर्यात् ॥६२॥

1 C इन्द्रय.
2 A B C ज्येष्ठ्यं.
3 C श्मश्रुणि.
4 B C मण्डल.
5 A B omit it.
6 A C तेजोमय, B तेजोमयः.
7 A B C छन्दोमणय.
8 B सः (note the absence of sandhi).
9 A C प्रजापति, B प्रजापतिः.
10 C होमोस्. The four wives are mentioned in ŚBM XIII.4.1.8.
11 C तिचेरूः.
अति + √चर् is not found in any other

11 C तिचेरू .
अति+√ चर् is not found in any other Brāhmaṇa. It means 'be unfaithful to'.
12 The superlative अनुव्रततमा is new to MW, VPK and Index Védique. The positive अनुव्रता is found in ŚBM III.7.1.22, TB III.3.3 2, JUB I.17.2.6.
13 C एव.
14 C एवात्यु-.
15 C एवासु-.
16 C जाय.
17 C दक्षिणादृध्या.

## २.६३

प्रथमां संनह्यति, प्रथमां वाचयति, प्रथमां पूर्णपात्र आगच्छत्य्, अनन्तरिताः पत्नय[1] स्थ । उदग् उ यज्ञीयं कर्म संतिष्ठते । इति न्व् अधिदवतम्[2] ।

अथाध्यात्मम्[3] । अयम् एव दीक्षितो यो ऽयं चक्षुषि पुरुषः । तस्य यान्य् अर्वाञ्चि[4] पक्ष्माणि तानि श्मश्रूणि, यान्य् ऊर्ध्वानि ते केशाः[5] । यद् एव शुक्लं च कृष्णं च तत् कृष्णाजिनस्य[6] रूपम् । शुक्लम् एव शुक्लस्य रूपं, कृष्णं कृष्णस्य । अथ यद्[7] एतन्[8] मण्डलं ता आपस् तद् अन्नं[9] तद् अमृतम् । तस्मिन्न् एतस्मिन् मण्डले तेजोमयश्[10] छन्दोमयः[11] पुरुषः । स प्राणस्, स इन्द्रस्[12], स प्रजापतिस्[13], स दीक्षितः । स[14] हैवंविद् दीक्षमाणो, यथैवैष एतद् इन्द्रियं ज्यैष्ठ्यं[15] श्रैष्ठ्यम् अभि दीक्षित, एवम् एवेन्द्रियं ज्यैष्ठ्यं[16] श्रैष्ठ्यम् अभि दीक्षितो भवति । तस्माद् उ हैवंविदि[17] दीक्षित ईश्वरो राष्ट्राणि[18] समुत्कम्पितोः[19] क्षामरन्ध्र[20] इव हि[21] समाभवति[22] । एवं ह्य् एतद् इन्द्रियं ज्यैष्ठ्यं[23] श्रैष्ठ्यम्[24] अभि दीक्षितो भवति । तस्माद् उ सर्वम् एवाभिवदत्य्—आचार्यं, पितरं, क्षत्रियम्[25] । एवं ह्य् एतद् इन्द्रियं ज्यैष्ठ्यं[23] श्रैष्ठ्यम् अभि दीक्षितो भवति[26] ॥६३॥

1 So all MSS.
2 A अधिदैवतम्.
3 Cf. JB II.62 (beginning).
4 C अर्वाञ्चि.
5 C कोशा.
6 C कृष्णजिनस्य.
7 A B C याद्.
8 C एत.
9 B C अन्न.
10 C तेजोमय.
11 A छन्दोमयं.
12 C न्द्रस्.
13 B C प्रजापति.
14 After it C inserts दीक्षितेथ.
15 A B C जैष्ठ्यं.
16 B ज्यैष्ठ्य, C जैष्ठ्य.
17 C हैवंविद्.
18 A C राष्ट्रान्, B राष्ट्रानि.
19 A C समुत्कम्पिनो. सम्+उत्+√कम्प् is not found in the other Brāhmaṇas. Prof. Renou also does not record it in his Index Védique. MW quotes समुत्कम्पिन् from the Jātakamālā of Āryaśūra. Cf. उत्कम्पयति in ŚBM XIV 2.2.17.
On समुत्कम्पितो (-*toḥ* infinitive) see JBR p.11. ईश्वरो राष्ट्राणि समुत्कम्पितो means 'he who can make kingdoms tremble' (see Macdonell, Vedic Grammar for Students, §211, 3b, p.338). For the idiom cf. हूणैर्यस्य समागतस्य समरे दोर्भ्यां धरा कम्पिता in Bhitari Stone Pillar Inscription of Skandagupta (Bhandarkar, List of the Inscriptions of Northern India, no 1549) line 15.
20 No v.l. क्षामरन्ध्र is new to MW, VPK and Index Védique. So also रन्ध्र. क्षामरन्ध्र connotes 'a meek and submissive

person'. क्षाम in the sense of 'meek' is not found in earlier literature, including the Brāhmanas. With रन्ध्र cf. रध्र 'pliant, obedient' in the Rgveda (√रध् and √रन्ध् are doublets).

21 C भि.

22 सम्+आ+√भू is new to MW, VPK and Index Védique. Here सम् seems to have been added to the usual आ+√भू to make it correspond to सम् in समुत्कम्पिनो (where it is prefixed for emphasis)—a वाक्यालङ्कार? Note the loc. (एवंविदि दीक्षिते) with सम्+आ+√भू.

23 C जैष्ठ्य.

24 A B ज्यैष्ठ्यम्. Can ज्यैष्ठ be a genuine form?

25 See Dr. B. Ghosh, Collection of the Fragments of Lost Brāhmanas, Frag. LX, p.100.

26 C भवन्ति.

## २.६४

[1]विचक्षणवतीं[2] वाचं[3] वदति । अन्नं वै विचक्षणम् । अन्नवतीम् एव तद् वाचं वदति । विचक्षणवतीं वाचं वदति । सोमो वै विचक्षणः । अन्नम् उ वै सोमः । अन्नवतीम् एव तद् वाचं वदति । विचक्षणवतीं वाचं[3] वदति । प्राणो वै विचक्षणः । तस्य वाग् एव मिथुनम् । मिथुनवतीम् एव तद् वाचं वदति । विचक्षणवतीं वाचं वदति । अन्नं वै विचक्षणम् । अन्नेन हीमाः[4] प्रजा विपश्यन्ति । तत आभ्यः प्रजाभ्यो ऽन्नाद्यं प्रयच्छति । स यदास्मै व्रतं[5] प्रयच्छेत्, सर्वम् एव व्रतयेत्[6]—सर्वस्यान्नाद्यस्यावरुद्ध्यै[7] । यद्य् उ परिशिंष्याद्[8], व्रतप्रदं[9] ब्रूयाद्—अशान वा पिब वेति । यद्य् उ व्रतप्रदो[10] ऽनुच्छिष्टाशी[11] वा स्यात् परि वा शिंष्यात्, तद् अद्भिर्[12] अभ्युक्ष्य छायायां निषेक्तवै[13] ब्रूयात् । तद् ओषधीभिर् अभिसंछादयितवै[14] ब्रूयात् । तद् ओषधीनां मूलान्य् उपसिञ्चति[15] । वर्षुकः[16] पर्जन्यो भवति यत्रैवंविद्वान् दीक्षते[17] । दीक्षिता उदशुश्रूषन्[18] इतीहाहुः[19] । स यदा दीक्षणीयेष्टिस् संतिष्ठेत[20] । यदैनम् अध्वर्युर्[21] अभ्यञ्जयेद् यदा संपवयेद् अथैतम् आदित्यम् उपतिष्ठेत त्वं देवता दीक्षितासि । मा दीक्षमाणस्येन्द्रियं ज्यैष्ठ्यं श्रैष्ठ्यं यश आदत्से । मा म इन्द्रियं ज्यैष्ठ्यं[22] श्रैष्ठ्य यश आदिथाः[23] । तव दीक्षाम् अनु दीक्ष[24] इति । तस्यैषा देवता दीक्षमाणस्येन्द्रियं ज्यैष्ठ्यं[22] श्रैष्ठ्यं[25] यशो नादत्ते ॥६४॥

1 This section has been partly edited in Auswahl §126. Cf. AB I.6. 8-9, CH §19, §22 and KB VII.3.

2 C विचक्षणावतीं. See Keith, Rigveda Brāhmaṇas Translated p.111, note 2.

3 It is omitted by C.

4 C हिमां.

5 C वृतं.

6 A व्रतयत्, B व्रतंयत्, C वृतयत्.

7 C -वरूध्यै. Caland has अन्नस्य for अन्नाद्यस्य.

8 A परिशिष्या, C परिशिष्या.

9 A B C व्रतपदं.

10 A व्रतवृदो, B व्रतेवृदो.

11 C -शि.

12 A B C अद्भिर्.

13 A B C निषेत्तवै. See Oertel, JBR p.13.

14 C अभिसछादयितवै.

15 B उपसिञ्चति.

16 C वर्षकः.

17 C दीक्षिते.

18 A उदशृशुषन्न्, B उदशुशुषन्न्. उद्+√श्रु is new to MW, VPK and Index Védique. See Oertel, JBR p.95.

19 C इति हाहुः.

20 C सन्तिष्ठत.

21 C अध्वार्य्युर्.

22 C जैष्ठ्य.

23 C आदिताः.

24 C दीक्षित. A similar formula occurs in II.52.

25 Omitted in C.

## २.६५

**तम् अध्वर्युर् अभ्यज्य प्रपाद्यौद्ग्रहणानि[1] जुहोति । यदौद्ग्रहणानि[2] जुहोति यद्[3] अस्मा औदुम्बरदण्डं[4] प्रयच्छत्य्[5] अथैतम् आहवनीयम् उपतिष्ठेत** वाचा मे वाग् दीक्षताम्[6] अग्नये[7] समष्टवा उ, प्राणेन मे प्राणो दीक्षतां वायवे समष्टवा उ, चक्षुषा मे चक्षुर् दीक्षतां सूर्याय समष्टवा उ, मनसा मे मनो दीक्षतां[8] प्रजापतये समष्टवा वु[9] **इति । तद् एताभिर् अनार्ताभिर् देवताभिर् इमा स्वा देवता दीक्षयति । अथाह** अग्निर् दीक्षितः[10], पृथिवी दीक्षा, सा मा दीक्षा दीक्षेत, तया दीक्षया दीक्षे । वायुर् दीक्षितो[11], ऽन्तरिक्षं दीक्षा, सा मा दीक्षा दीक्षेत, तया दीक्षया दीक्षे । आदित्यो दीक्षितो, द्यौर् दीक्षा, सा मा दीक्षा दीक्षेत[12], तया दीक्षया दीक्षे । प्रजापतिर् दीक्षितो, मनो दीक्षा, सा मा दीक्षा दीक्षेत, तया दीक्षया[13] दीक्षे[14] । वाचं[15] म ऋचो ऽनु दीक्षन्तां[16], मनो[17] यजूंषि, प्राणं सामानि । श्रद्धा मे सोमो राजानु दीक्षताम् । ऋचा दीक्षे, यजुषा दीक्षे, साम्ना दीक्षे, पृथिव्या दीक्षे, ऽन्तरिक्षेण दीक्षे, दिवा दीक्षे[18] **इत्य् अत्र कृत्स्नो दीक्षितः । अथ यस्यादीक्षिता इमे लोका अदीक्षितानि छन्दांस्य् अदीक्षितस् सोमो राजा—॥६५॥**

☞ For this section see the parallel KB VII.4 and TB III.7.7.4f.

1 A प्रपाद्यौत्गृण्हानि, B C प्रपाद्यौत्गृहणानि.

2 A B C यदौत्गृहणानि. See Index Védique *s.v.* औद्ग्रहण.

3 C यदा.

4 औदुम्बरदण्ड is new to MW, VPK and Index Védique.

5 A B C प्रायच्छत्य्.

6 C दीक्षिताम्.

7 B C अग्नु.

8 C दीक्षत.

9 वु=उ.

These formulae occur in ĀpŚS X.10.6, and similar ones in ĀpŚS X.8.7, KB VII.4 and ŚSS V.4.1.

10 A दीक्षित.

11 A दीक्षा.

12 C दीक्षा.

13 After it A inserts दीक्षेया दीक्षया, and B C insert दी या दीक्षया. Can we read दीक्षे दीक्षया instead of the readings of A and B C? In that case the text would have दीक्षया दीक्षे दीक्षया दीक्षे. The parallel ĀpŚS X.10.6 has दीक्षा only once.

14 These four formulae occur in ĀpŚS X.10.6 with दीक्षयतु for दीक्षेत.

15 A C वाचम.

16 Cf. TB III.7.7.8, ĀpŚS X.11.1 ऋचस्त्वा दीक्षमाणमनु दीक्षन्ताम्.

17 C ममनो.

18 For similar formulae see TB III 7.7.4f.

## २.६६

—तं सकामम्[१] अभ्यश्नुवीत[२]। अथ हैवंविद् दीक्षमाण एव[३] सर्वान् कामान् उपाप्नोति[४]। तस्माद्[५] दीक्षासु न राजानं परिवेविष्यात्[६]। यद्व्रतो[७] [८]ह्य् एवैष[८] भवति तद्व्रता इमे लोकास् तद्व्रतानि[९] छन्दांसि तद्व्रतस्[१०] सोमो राजा। अथाह भूर् भुव स्वस् सुपोषः पोषैस्[११] सुवीरो वीरैस् सुप्रजः प्रजयासम्[१२] इति। तद् एताम् अपरिमिताम् आशिषम् अन्त[१३] आशास्ते तपो मे[१४] प्रतिष्ठेति[१५]। तत् तपः प्रतिष्ठां कुरुते। श्रद्धा मेऽक्षितिर्[१६] इति तच् छ्रद्धाम् अक्षितिं[१७] कुरुते। [१८]सत्यं मे[१८] गृहपतिर्[१९] इत्य् एष वै सत्यम्। सत्यं य एष तपति। सैषानार्ता देवता। [२०]तद् एताम्[२०] अनार्तां देवतां गृहपतिं कुरुते। स वा एष सुव्रतः[२१]। यद् ध्य् एषा[२२] खला[२३] स्यात् सर्वम् इदं प्रदहेत्। तस्माद्[२४] गृहपतिस् सुव्रत[२५] स्यात्। स यद् व् अदीक्षितव्रतं[२६] चरेद् अपाप्यं[२७] वा पापं वदेन् मिथुनं वा चरेद् अन्यद् वा मिथ्याकुर्याद्[२८] एतम् एवादित्यम् [२९]एतैस् सर्वैर्[२९] जपैर्[३०] उपतिष्ठेत। ततो हैव दीक्षितः। स वा एष एतर्ह्य्[३१] अदीक्षितः। यद् व् एवास्मिन् दीक्षिते[३२] यश आसीत् तद् व् एवास्मिन्न् अप्य् एतर्हि[३३] यशः। तद् आहुस्[३४]—स वाद्य[३५] दीक्षेत [३६]स वान्यं[३६] दीक्षयेद्, य एतस्य दीक्षितयशसस्य[३७] व्यवच्छित्तिं[३८] विद्याद् इति। कृष्णाजिनं वाव दीक्षितयशसम्। एतद् धि[३९] सर्वेषां वेदानां रूपम्। यानि शुक्लानि तानि साम्नां रूपं, यानि कृष्णानि तान्य् ऋचाम्। यदि वेतरथा[४०]। यान्य् एव बभ्रूणीव[४१] हरीणि तानि यजुषाम्। तस्माद् यद्य् अप्य् एनद्ध्रुक्तो[४२] वस्ते दिदृक्षन्त एवैनम्। एतद् ध्य् अस्मिन् दीक्षितयशसं[४३] भवति ॥ ६६ [४४]॥

1 The adverb सकाम 'with a desire' is not found in the other Brāhmaṇas (TB II.5.3.2 has सकाम). MW also does not register it in this sense.

2 C अभ्यश्नुपीत.

3 'while undergoing consecration'.

4 C अवाप्नोति.

5 C तस्मा.

6 C परिवेष्ट्यात्.

7 A B यद्वृतो, C यभ्यद्वृतो.

8 C ह्यैवै.

9 C तद्वृतानि.

10 C तद्वृतस्.

11 A पेषैस्.

12 A प्रजयाम्, Vedic Concordance प्रजया स्याम्.

13 C अन्तत..

14 C मो.

15 This formula also occurs in TB III.7.7.10.

16 It occurs in TB III.7.7.9 and ĀpŚS X.3 8.

17 B C अक्ष.ति.

18 A सत्यमेम.

19 ĀpŚS X.10.6.

20 C omits तदेता.

21 C सुत.

22 A एशो.

23 A B C खल. Cf. खला देवता in JUB I.5.1,4.

24 A B C तस्मात्.

25 C सुप्रहत.

26 C अदीक्षितप्रतश्च्. अदीक्षितव्रत is not registered in MW, VPK and Index Védique.

दीक्षितव्रत occurs in KB IV.4 and AB VII.23

27 =अप+अपवद्य अप goes with वदेत् अपवद्य is not given by MW.

28 C मिथ्याआर्य्यदि.

29 C एतैवेद्.

30 C जपैद्.

31 A B C एतद्य.

32 A दीक्षते.

33 A एतहि, B एतहीं.

34 A B C अ.

35 C एवाच.

36 A स्वान्य, B C स्वान्य.

37 A C -यशस्स्या.

38 MW, VPK and Index Védique do not record व्यवच्छित्ति. व्यवच्छित्ति means 'distinction'

39 C हि.

40 A C वेतरसा.

41 A B C बभ्रूणिव. Cf. ŚBM I.1 4.1-2 अथ कृष्णाजिनमादत्ते ..तस्य यानि शुक्लानि च कृष्णानि च लोमानि तान्यृचां च साम्नां च रूपम्। यानि शुक्लानि तानि साम्नां रूपं यानि कृष्णानि तान्यृचाम्। यदि वेतरथा यान्येव कृष्णानि तानि साम्नां रूपं यानि शुक्लानि तान्यृचां यान्येव बभ्रूणीव हरीणि तानि यजुषां रूपम्. Eggeling translates बभ्रूणीव हरीणि as 'the brown and the yellow ones'. It would be better to take बभ्रूणीव as 'brownish'.

42 A एनदद्दक्तो, B एनदद्दुक्तो, C एनदद्राक्तो

43 C दीक्षिताम्यशस.

44 A C omit ॥६६॥.

## २.६७

ते[1] ये सकृष्णाजिना[2] अपो ऽभ्यवयन्ति, य एतस्माद् दीक्षितयशसाद्[3] अवच्छिद्यन्ते[4], ते सर्वम् आत्मानं प्रप्लाव्य पाप्मना[5] सहोदायन्ति। स यदावभृथेष्टिस्[6] संतिष्ठेताथोन्मुच्य कृष्णाजिनम् अद्भिर् अभ्युक्षेद्[7] इन्द्रियाज्[8] ज्यैष्ठ्याच् छैष्ठ्यान् मा योषम्[9] इति। अथ [10]यम् अरातिं[10] मन्यते, तस्मै प्रयच्छाति। अथाप आचामति भक्षस्यावभृथो ऽसि, भक्षणस्यावभृथो[11] ऽसि, भक्षितस्यावभृथो[12] ऽसीति[13]। स [14]यद् एवात्रर्जीषे[14] किं चित् सक्तं भवति, तस्यैव भक्षः[15]। अथापः प्रविशाति। न्यञ्चनं वा एतत् प्रपदनं यद् आपः[16]। न्यञ्चनम् एवैतत् [17]प्रपदनं प्रपद्यते[17] पाप्मनो ऽनन्ववायाय[18]। यद्य्[19] आप[20] स्यन्देरन्, प्रतिस्रोतं गाहेत पाप्मानं[21] मे निर्वहान् इति। सर्वा उ ह त्वा[22] आप[20] स्यन्दन्ते। या[23] उ ह स्थावरा[24], अवाचीम् ता स्यन्दन्ते, ऽवाञ्चम्[25] एवास्य ताः पाप्मानं निर्वहन्ति[26]।

अन्यो ऽन्यस्य जायापती पृष्ठं[27] प्रधावतः[28]। वज्रो वा आपः। वज्रेणैव तत् सर्वं पाप्मानम् अपहनाते[29]। अथो द्वन्द्वम्[30] एव तन् मिथुनं प्रजननं कुर्वाते, प्रजात्यै। स्नात्वा [31]क्षिप्र उदेयात्[31], क्षिप्रं पाप्मनो व्यावृत्त्या[32] इति ॥६७॥

☞ §§67 and 68 have been edited and translated by Prof. Caland in Auswahl §127. Cf. CH §254 *f*, *g*, *i*, *k*, *l* and ŚBM IV.4.5.

1 C दे.

2 C कृष्णाजिना.

3 See Auswahl §127 note 8. Cf. JB II.66 and ŚBM I.1.4.2.

4 C अवच्छिद्यते.

5 A B C पाप्माना.

6 A B यदावभृथेष्टि, C दावभृथेष्टि. Cf CH §254d (Auswahl §127 note 9).

7 A अद्भ्युक्षेद्.

8 C इन्द्रिया.

9 According to the Vedic Concordance it does not occur elsewhere.

10 C य रातिन्. Caland wrongly reads यं राति. Our two best MSS show यमराति and it would not be proper to give to a friend a black antelope skin which takes away the glory of consecration and perpetuates sin (ते ये सकृष्णाजिना अपो ऽभ्यवयन्ति य एतस्माद् दीक्षितयशसादवच्छिद्यन्ते ते सर्वमात्मान प्रप्लाव्य पाप्मना सहोदायन्ति). Cf. CH §254f, ĀpŚS XIII.19.9, MŚS II.5.4.33, Hir X 18, and see Auswahl §127 note 10.

11 A B C -भृतो.

12 A B C -भृथे.

13 Cf. ĀŚS VI.13.9 भक्षस्यावभृथोऽसि भक्षितस्यावभृथोऽसि भक्षकृतस्यावभृथोऽसि.

14 A देवोत्रज्ञीषे, B देवात्रज्ञीषे, C एवोत्रजिषे.

15 All MSS भक्तः.

16 A B C आप्रः.

17 C प्रपद्य प्रतिपद्यते.

18 C नन्ववावाय.

19 C याद्.

20 So all MSS (without the visargas).

21 C पाप्मानुम्.

22 C omits त्वा.

23 C य.

24 C स्थवर.

25 After it C repeats वाश्रमे.

26 Cf. ŚBM IV.4.5.10.

27 C पृष्ठम.

28 Cf. ŚBM IV.4.5.23 (Auswahl §127 note 11).

29 C अपहना.

30 A द्रव्वम् (Auswahl §127 note 2 द्रजम्), C द्रव्रम्.

31 C क्षिप्र देयात्. क्षिप्रे is of common occurrence in ŚBM, besides KB I.1, TB III.9.1.3, JUB I.4.7.

32 A B व्यावर्त्ता, C व्यावृत्ता.

## २.६८

उन्नेतर् उन् मा नयेत्य्[1] आह । विष्णुर् वा उन्नेता । यज्ञो वै विष्णुः । यज्ञ एवैनं तत् सर्वस्मात् पाप्मनो विमुच्योन्नयति[2] ।

उद् वयं तमसस् परि सुव· पश्यन्तो ज्योतिर् उत्तरम् ।
देवं देवत्रा सूर्यम् अगन्म ज्योतिर् उत्तमम्[3] ॥

इत्य् एतां जपन्न् उदैति । एतद् वै[4] ज्योतिर् उत्तमं य एष तपति । सैषानार्ता[5] देवता । तद् [6]एताम् अनार्ता[6] देवताम् आरभ्योदैति । औदुम्बरीर् आर्द्रास् सपलाशास् समिधः कुर्वत एधो[7] ऽस्य् एधिषीमहीति[8] । गत्वाहवनीये समिधम् अभ्यादधाति समिद् असि, तेजो ऽसि, तेजो मयि धेहि, स्वाहेति[8] । अभ्याधायोपतिष्ठते

अपो[9] ऽन्व् अचार्ष[10] रसेन समसृक्ष्महि ।
पयस्वं[11] अग्न आगमं तं[12] मा संसृज वर्चसा ॥

इति । एवम् एव पत्नी[13] गार्हपत्ये ऽभ्याधायोपतिष्ठते[14] । आज्यस्थालीं[15] सस्रुवाम्[16] आदायोत्तरेणाग्नीध्रं[17] च सदश् च परीत्यापरेण[18] [19]गार्हपत्यम् उपविश्योपस्थे[19] कृष्णाजिनम् आधाय[20] चतुर्गृहीतम्[21] आज्यं गृहीत्वा जुहोति मयीन्द्रियं[22] ज्यैष्ठ्यं श्रैष्ठ्यम् अग्निर् दधातु स्वाहेति[23] । स यद् एवास्मिन् दीक्षिते यशो[24] भवति, तद् अस्मिन्न् उत्थिते यशो भवति । तत् कृष्णाजिनं नातिपादयेत्[25], स्रुगवधानं वैनत् कुर्वीत, हविषो वाधिपेषणं[26], पुनर्दीक्षायै[27] वैनन्[28] [29]निदधीत । एषा[29] वै कैशिनी[30] दीक्षा । एतां ह केशी[31] दार्भ्यो दीक्षाम् उपनिषसाद ॥६८॥

☞ Cf. ŚBM XII.9.2.

1 Vedic Concordance does not register it. Cf. ĀŚS VI.13.14 (उन्नेतरुन्नो नय .), MS I.3.39, KS IV.13, ĀpŚS XIII.21.3.

2 A B C -नयति.

3 RV I.50.10 (for other references see Vedic Concordance). It is not found in JS.

4 So all our MSS, but ध (=ह) in Auswahl.

5 C सैषानर्त्ता.

6 C एतानामर्त्ता (metathesis), Auswahl (MSS) एतान् अमर्ताम्.

7 C एधे.

8 VS XX.23, XXXVIII.25 (for other references see Vedic Concordance).

9 A adds अद्य after it. ŚBM XII.9.2.9, VS XX.22, MS I.3.39, KS IV.13, XXIX.3, XXXVIII.5, LŚS II.12.13, MŚS I.7.4.47, MG I.1.17, 11.25, II.2.26, ĀpMB II.6.6, ĀpG IV.11.22, KŚS XIX.5.18 have अद्य. TS I.4.45.3, 46.2, TB II.6.6.5, ĀpŚS VII.27.16, VIII.8.18, 18.10, XIII.22.6 do not have अद्य like our text.

10 See Vedic Variants II §754 for the i form of the aorist of √चर्.

11 C पयस्वा. See Auswahl §127 note 4.

12 C तम.

13 C पक्ति.

14 A C अभ्यधा-.

15 A C आज्यस्थाली.

16 A सुवाम्, C सुस्रवाम्.

17 C -स्रीधं.

18 C परि-.

19 A गार्हपत्योप-.

20 A आदाय

21 A चतुर्ग्रहीतम्.

22 A मयीन्द्रिय, C मैन्द्रिय.

23 According to the Vedic Concordance it occurs only here.

24 A C दीक्षितयशो, Auswahl records the variant दीक्षतेयशो. Caland and Oertel (Syntax of Cases in the Prose of the Brāhmanas §57 Ex.3) adopt दीक्षितयशो, which word is found nowhere else. The topic begun in the previous section is completed here. It is clearly brought out by दीक्षिते यश (the reading adopted here), which also supplies us the correlative of उत्थिते यशः. Correct the translation of Oertel (*ibid.*) to 'so what glory there is in the consecrated (sacrificer), that glory remains in him after he has arisen'.

25 Cf. Hir X.18 (quoted in Auswahl §127 note 12).

26 A B वातिपेषण (अतिपेषण is not found in MW, VPK and Index Védique), C वाधिपेषण. Cf. ĀpŚS XIII.19.8, MŚS II.5.4.33, Hir X.18 (quoted in Auswahl §127 note 13). अधिपेषण occurs in ŚBM I.1.4.3 and ŚBK II.1.3.8

27 A B पुनर्दीक्षाया, C पुनर्दीक्षा.

28 A पैनन्. वैनन्=वा+एनत्. Cf. स्रगवधानं वैनत् कुर्वीत (above). ĀpŚS, MŚS and Hir (quoted in Auswahl) also have एनत्. Caland inadvertently reads एन in the text.

29 A निदिधीतेषा.

30 A B C कैषिनी.

31 A B C केषी.

## २.६९

मृत्युप्रजापती[1] यद् अयजेतां[2], तौ यज्ञाभ्याम् एवास्पर्धेताम्[3] । अथ ह तर्हि [4]यज्ञा-युधान्य् आसुर्[4] [5]यथेमान्य् एतर्हीष्टीण्व् आयुधानि[5] । तद् यद् यज्ञे स्तूयते यच्[6] छस्यते

यत् प्रचर्यते[७], सा प्रजापतेस् सेनास । अथ यद् वीणायां गीयते यन् नृत्यते[८] यद् वृथाचर्यते, सा मृत्योस्[९] सेनास[१०] । तयोर् ह समावत्याव्[११] एव सेने आसतुर्[१२]—यावत्य्[१३] एवेतरस्य तावतीतरस्य[१४] । तौ ह ज्योग् एवाविजयमानौ[१५] चरतुर्[१६] बह्वन्य् एव वर्षाणि । स प्रजापतिर् अकामयत—जयेयं[१७] मृत्युम् इति । स एतां यज्ञे संपदम् अपश्यद् एतत् संख्यानम्[१८] । तेन मृत्युम् अजयत् । तस्य पराजितस्य[१९] राजाशुच्यत्[२०] । स प्रत्यङ् पतित्वा पत्नीशालां प्रापद्यत । तस्मात् [२१]पत्नीभ्य हय च यस् संपदासुत[२१] इत्य् असुत इति हैतन्, न हि सो ऽस्नूयत[२२] । तस्य यानि[२३] स्तुतशस्त्राण्य् [२४]आसन् यद्[२४] एवैतद् [२५]वीणायां गीयते यन् नृत्यते यद् वृथाचर्यते[२६], तान्य एव तानि[२५]—॥६९॥

☞ §§69 and 70 have been edited in Auswahl §128

1 A B C -पति. मृत्युप्रजापति is not recorded in MW, VPK and Index Védique.

2 A अजयेतां.

3 C -स्पर्वेताम्.

4 A -सूर्, C यज्ञायुधान्यौसूर्. The *yajña-yudhas* are mentioned in AB VII 19 and TB III.2.5.9. In the latter passage the asuras were defeated by them.

5 A यथेमान्येतर्हिष्वायुधानि, B यथेमान्येतर्हीष्वायुधानि, C यथेमान्नेतर्हिष्वायुधानी.

6 C य.

7 C प्रचार्य्यते.

8 C भृत्यथे.

9 C मृत्यो.

10 C सेनास्.

11 A B समावत्योव्, C समापत्योव्.

12 A आस्तुर्.

13 A यात्य्.

14 A omits तावतीतरस्य.

15 A B C -मनौ.

16 C चरतुर्.

17 C यजेयम्.

18 Cf. JB II.73 तदेतदनन्त यत् सख्यानम् तदेतदमृत यत्सख्यानम् ..सा हैषा देवानां सेना यत् सख्यानम् (See Auswahl §128 note 7).

19 A पराजित्य.

20 A C राजाशूच्यत्. See note 18 of the next section.

21 B C Auswahl (*text*) पत्नी सहचयस् स यदासुत. The text is unsettled.

22 A आयत. Ātmanepada is rare.

23 C यान.

24 C आसन्नद्

25 C omits वीणायां गीयते. तान्येव तानि

26 A B वृधा-.

## २.७०

—[१]अथ[२] यो यूप आसीद्, य एवैष वीणायै दण्डस्, स एव सः । अथ या रशना आसन्, यान्य् एवैतानि[१] वीणाया उपवाणानि[३], ता एव ताः । अथ[२] यो द्रोणकलश आसीद्, यैवैषा वीणायै सूना, स एव सः । अथ यद् अधिषवणं[४] चर्मासीद्[५], यद् एवैतद् वीणायै चर्म[६], तद् एव तत् । अथ य उपरवा आसन्, य एवैते वीणाया [७]आकाशास्, त एव[७] ते । अथ ये[८] ग्रावाण आसन्, यान्य्[९] एवैतानि वीणायै वादनानि, त एव ते । अथ यानि सप्त चतुरुत्तराणि [१०]छन्दांस्य् आसन्[१०], या एवैतास्[११] सप्त वीणायै तन्त्र्यस्[१२], तान्य्[१३] एव तानि । अथ ये [१४]दशरात्रे स्तोमा[१४] आसन्, या एवैता दशांगुलयस्[१५] त

एव ते । तद् आहुर्—नेतर्हि संसवो[16] ऽस्ति[17] । यो हि द्वितीयो यज्ञ आसीद्, अशुच्यत्[18] सः । एक एव यज्ञः । प्रजापतिर्[19] यज्ञं एवेति ॥७०॥

1 C omits अथ यो यूप... यान्येवैतानि.

2 Caland अथो. But all our MSS read अथ. And so also the other parallels in this section—अथ या रशना आसन्, अथ यदधिषवणं चर्मासीत्, अथ य उपरवा आसन्, अथ ये ग्रावाण आसन्, अथ यानि सप्त चतुरुत्तराणि छन्दांस्यासन्, अथ ये दशरात्रे स्तोमा आसन्.

3 उपवाण is new to MW and it is not found elsewhere. It might refer to the strings of the lute. Cf. वाण the 100-stringed musical instrument, so called on account of the large number of its strings.

4 C अधिष्वणं.

5 C चमासीद्.

6 See Auswahl §128 note 10.

7 C आकाशानव.

8 C य.

9 C यान्न्.

10 A छन्दास्यन्, B C छन्दास्यासन्.

11 A ऐवैंता.

12 C तन्व्यास्.

13 C तान्न्.

14 A B C दशरात्रस्तोमा.

15 C दशांगुलायस्.

16 संसव is referred to in AB I.3, GB I.3.19 and JUB I.9.3. On AB *ibid* Sāyaṇa explains संसव as द्वयोर्वा बहूनां वा यजमानानां संभूय सोमाभिषवः संसवः। स च महान् दोषस्तस्मिन्नेव देशे तस्मिन्नेव काले मत्सरग्रस्तैर्यजमानैः प्रवर्तितत्वात् । नद्या वा पर्वतेन वा व्यवधानरहितयोः समीपवर्तिनोः परस्परमन्त्रध्वनिश्रवणयोग्ययोर्देशयोः स्पर्धमानाभ्यां यजमानाभ्यां प्रवर्तितौ यौ सोमयागौ तयोरयं संसवाख्यो दोषः । तथा च सूत्रकार आह—संसवोऽनन्तर्हितेषु नद्या वा पर्वतेन वा इति (also see Keith's note on it).

17 Now (एतर्हि) it is *not a saṃsava* (see the previous note), because the weapons of mṛtyu and Prajāpati are equivalent and Prajāpati *no longer vies* (न हि सोऽसृजत).

18 A C अशुच्यत, B अशुच्यत. √शुच् 'decline, wane'. 'The other sacrifice (of mṛtyu) waned'. Cf. संशुच्यति in ŚBM VI. 4.4.20. Also see Auswahl §128 note 4. In the preceding section अशुच्यत् means 'he languished'.

19 B C प्रजापति.

## २.७१

अथ 'वा अतस्[1] संख्यानस्यैव । तस्य वा एतस्य संवत्सरस्य सप्त विंशतिशतान्य्[2] अहोरात्राणां भवन्ति । ता नवाशीतयः । अथास्य[3] सवनानाम् अशीतिश् च सहस्रं च त्रीणि च । तावन्तः पवमानाः । तद् एतच्[4] छ्लोकेनाभिगीतम्[5]—

अष्टाव् एता नवतयो भवन्त्य् अहोरात्राणां परिवत्सरस्य ।
अशीतिर् अस्मिन् सवनानि त्रीणि च सहस्रं च, पवमानाश् च सर्वे ॥

इति ।

अथास्य स्तुतशस्त्राणां षष्टिशते[6] च[7] द्वे[8] दश च सहस्राणि । अथास्मिन् [9]धिष्णिया य[9] अग्नयो विह्रियन्ते[10] दश चैव सहस्राण्य् अष्टौ[11] च शतानि त्रिंशतं च । [12]तद् एतच् छ्लोकेनाभिगीतम्[12]—

षष्टिशते[13] द्वे मासि पृष्ठे स्तुतशस्त्राणाम् आ शतं चा शतानि[14] ।
दश सहस्राणि शतान्य् अष्टौ संवत्सरे धिष्णियास्[15] त्रिशतं च ॥

इति ॥७१॥

☞ For this and the following section cf. the closely parallel GB I.5.23.

1 A मात्रत..

2 सप्त विंशतिशतानि '720'. Cf. ŚBM XII.3.5.12, VII.3.1.43, X.4.2.2, GB I.5.5,6, KB XI.7, ŚĀ II.10.

3 C अथस्य.

4 C एत.

5 C छो-.

6 C पष्टिशने.

7 A omits च.

8 C त्वे.

9 A C धिष्ण्या, B धिष्णय य. Cf. धिष्ण्याः in the following stanza.

10 A B C विहृयन्ते.

11 B अष्ट.

12 C तत्रैवानाइलोकेनाभिगीत. But compare the line preceding the first stanza.

13 A B C षष्टिशने.

14 आ शतं चा (=च+आ) शतानि=10,000 (100×100). Note the multiplicative use of आ.

15 A C धिष्ण्यास्.

## २.७२

तावन्ति तारकनक्षत्राणि[1] तावन्ति ज्योतींषि तावन्तो ऽर्काः । आप्नोति ह वा एतानि तारकनक्षत्राण्य् आप्नोति ज्योतींष्य्[2] आप्नोत्य् अर्कान् य एवं वेद । अथास्य स्तोत्र्याणां[3] नवतिश्[4] च सहस्राणि त्रीणि च शतानि षण्णवतिश् च । तद् एतच् छ्लोकेनाभिगीतम्[5]—

[6]स्तोत्र्या अस्य[6] नवतिस् सहस्रा त्री[7] च शता नवतिश् चोप षट् च ।
ताभिस् संस्तुतो विवसान एति[8] भूतं भविष्यद्[9] भुवनं[10] प्रजापतिः ॥

इति ।

अथास्य पदानां चत्वारि च [11]सहस्रा त्रिंशं चायुतानि[11] सप्त शतानि[12] पञ्चाशतं पदानि । तद् एतच् छ्लोकेनाभिगीतम्[13]—

चत्वारि [14]सहस्रा त्रिंशं चायुतानि[14] सप्त शतानि पञ्चाशतं पदानि ।
संवत्सरस्य कविभि स्तुतस्यैतावती मध्यमा देवमात्रा[15] ॥

इति ॥७२॥

1 C तारकानक्षत्राणि. This compound is new to MW, VPK and Index Védique.

2 C ज्योतीष्.

3 A स्तोत्राणां.

4 C भवतिश्.

5 A छ्लोकेन सामाभिगीतम्.

6 A B C स्तोभ्यास्य.

7 A त्रि, C ती.

8 C ति.

9 A B C भविष्यत्.

10 C विचनं.

11 A C सहस्राण्ययुतानि त्रिशनं.

12 A दशानि.

13 C -गीत.

14 A सहस्राणि त्रिंशतं चायुतानि (so also in B in the dittography in the next section, note 8), C सहस्राणि सप्त सहस्राणि त्रिंशतं चायुतानि.

15 Cf. GB I.5.23 संवत्सरस्य कविभिर्मितस्यैतावती मध्यमा देवमात्रा.

## २.७३

अथास्याक्षराणाम् अयुतम् एकं[1] प्रयुतानि षष्टिर् नियुते द्वे नव चाक्षराणि सप्त सहस्राणि [2]दशतो दश[2]। तद् एतच्[3] छ्लोकेनाभिगीतम्—

अयुतम् एकं[4] प्रयुतानि षष्टिर्[5] नियुते द्वे नव चाक्षराणि ।
सप्त सहस्राणि[6] दशतो दशैतावान् आत्मा परमः प्रजापतेः ॥

इति । [7]तद् एतद् अनन्तं यत् संख्यानम् । तद् एतद् अमृतं यत् संख्यानम् । स एष सुकृतस्[8] सो यत् संख्यानम्[9] । अथ यद् [10]असंख्यानं मर्त्यं[10] तत् । तस्माद् उ सम् एव चक्षीत । सा हैषा देवानां सेना यत् संख्यानम् । मनुष्यसेनया[11] वाव नु तं स्तृणुते[12] यं तिस्तीर्षते[7] । तादृग् इह तं स्तृणवा तं यं देवसेनया[13] तिस्तीर्षाता[14] इति । अथैते त्रयः पन्थानस् सुकृता देवयाना अक्षय्यः[15] पद्यक्म्यश्[16] च । ते विद्वांसो ऽभिवहन्ति ब्राह्मणं यत्र मृत्युर् भवत्य् अन्नम् अस्य । तद् एतच् छ्लोकेनाभिगीतम्[17]—

त्रयः पन्थानस् सुकृता देवयाना अक्षय्यः[18] पद्यक्म्यश्[19] च[20] ।
ते विद्वांसो ऽभिवहन्ति [21]ब्राह्मणं यत्र[21] मृत्युर् भवत्य् अन्नम् अस्य ॥

इति ।

अक्षरशः पञ्छो ऽमृतं लिहानाः[22] ॥७३॥

1 C एक.
2 C omits it.
3 C एत.
4 B एकतं.
5 A B C षष्ठिर्.
6 A B C सहाणि.
7 It is edited up to तिस्तीर्षते in Auswahl §128 note 7.
8 A सुकृत, B सुकृतेतर, C सुकृततेन. After it B inserts प्रजापतिरयथास्य पदानां चत्वारि च शतान्ययुतानि त्रिंशतं सप्त शतानि पञ्चाशतं पदानि तेदतत् श्लोकेनाभिगीतं चत्वारि सहस्राणि त्रिंशतं चायुतानि सप्त शतानि पञ्चाशतं पदानि संवत्सरस्य कविभिः स्तुतस्यैता प्रजापतिरित्यथायिनन्वलितल......... (illegible).
9 B संख्यानाम्.. Caland omits this sentence.
10 A B असंख्यातममर्त्यं.
11 मनुष्यसेना is not recorded in VPK, MW and Index Védique. सेना 'missile'.
12 See Oertel, JBR p.106.
13 देवसेना occurs in KB II.9 only. Keith translates it as 'missile of the god'. MW does not give this meaning.
14 C -त.
15 A अक्षय्यं. Cf. ŚBM XI.1.2.11-12 ...त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि तदहान्याप्नोति तद्वेव संवत्सरमाप्नोति ॥ मर्त्या ह वा अग्रे देवा आसुः । स यदैव ते संवत्सरमापुरथामृता आसुः । सर्वं वै संवत्सरः । सर्वं वा अक्षय्यमेतेनो हास्याक्षय्यं सुकृतं भवत्यक्षय्यो लोकः.
16 A पद्यक्मिश् (sg.); C प्रद्यक्मिश्
17 A -गीत.
18 A B -यं.
19 A पद्यक्मिश्, B पद्यक्रकम्यश्, C पद्यत्मिश् (त and क are confused in the Grantha script).
20 After it C inserts ते विद्वांसोभिवहन्ति

ब्राह्मण यत्र मृत्युर्मवत्यन्नमस्य तदेतच्छ्लोकेनाभिगीत त्रय पन्थानस्सुकृति देवयाना अक्षय्यः पद्यत्मिश्च.

21 A C ब्राह्मणो यत्र, B ब्राह्मणय्यत्र. Cf ब्राह्मणम् supra.

22 Vedic Concordance wrongly leaves out this quarter. B लिशाना., C लालिशानाः. The reading is uncertain.

## २.७४

[अक्षरशः पच्छो ऽमृतं लिहाना·][1]
[2] सुवर् आयन् देवता देवसत्त्रान्[3] ।
तपसा कर्म कवयो ऽनुगत्य
आह्राय[4] मृत्युम् अति मेधयायन् ॥
विजानन्तो दहन्तो[5] यन्ति शोकम्
मनीषिणो [6]यद् अपक्षा·[6] पतन्ति ।
यत्रामृतं विद्यते नोत मृत्युस्
तत्र विद्वांसः कवयः क्षियन्ति[7] ॥

**एवंविद्वांसो यजमानम् ऋत्विजो[8] लोकान् पशून् अभि[9] कामान् वहन्ति । स यज्ञेषु स्तुतशस्त्रम् अश्नुते ऽक्षय्या यस्य [10]भवन्त्य् ऋत्विजो[10] ऽध्वर्युर् होतोत सामगः[11] । तस्मै छन्दांसि मधुधाराः क्षरन्ति । स यज्ञेषु स्तुतशस्त्रम् अश्नुते ऽक्षय्या यस्य [12]भवन्त्य् ऋत्विजो[12] ऽध्वर्युर् होतोत[13] सामगः[11] । तस्मै छन्दांस्य्[14] अमृतकुल्या अभिवहन्ति[15] ऊर्मिणी[16] स्तोत्रशस्त्रैर् इति ॥७४॥**

1 This line is quoted here from the preceding section to maintain the unity of the stanzas.

2 Vedic Concordance wrongly begins the stanza from this quarter and ends it with विजानन्तो दहतो यन्ति. The mistake in the end is due to the haplological insertion of यज्ञेषु स्तुतशस्त्रमश्नुते क्षय्या यस्य भवन्त्वृत्विजोध्वर्युर्होतोत सामक in C, after यन्ति (in line 5).

3 देवसत्त्र is not found in MW, VPK and Index Védique.

4 C आन्हाय (न्ह is due to its frequent confusion with ह्र). Vedic Concordance wrongly reads *an(u)hāya*. आह्राय 'for a succession of days' (Eggeling) occurs in ŚBM VI.6.4.3 and in Pāṇini (MW).

5 All MSS दहतो.

6 C वदपक्षाः. Vedic Concordance (*s.v.* मनीपिणो) वद पक्षा·.

7 A क्षीयन्ति. These stanzas do not occur in JS. Vedic Concordance erroneously continues the line up to एवंविद्वांसो यजमानमृत्विजो (incorrectly reading the last part as यजमान मृत्युः).

8 C ऋत्युद्विजो.

9 अभि goes with वहन्ति.

10 C भवन्तर्वित्विजो.

11 A B C सामकः.

12 C भवन्त्यर्त्विजे.

13 C होतो.

14 C छछन्दांस्.

15 A भिभवन्ति, B C भिवहन्ति. A C end the section here.

16 A ऊर्मणि, C ऊर्मीणी.

## २.७५

एकैकम् उ ह वा एतेषाम् अक्षराणां यावतीयं पृथिवी तावत्। ऊर्जो ऽन्नाद्यस्य[1] मधुनो ऽमृतस्य कामस्य-कामस्य पूर्णं[2] पिब्दमानं[3] तिष्ठति। तद् धैवंविद्वान् ब्राह्मणस् सहस्रं-सहस्रं देवयुगान्य्[4] उपजीवति। तद् यद् आप्यते ऽथेतरद् उपसंक्रामत्य्[5] अथेतरत्[6] पुनर् आख्यायते। तस्माद् उ हैवंविदे ब्राह्मणाय दित्सन्त्य्[7] अस्योर्जो ऽन्नाद्यस्य मधुनो ऽमृतस्य कामस्य-कामस्य लिप्सामहा इति। यथा ह वा इदं क्षेत्र-पादं[8] वा क्षेत्ररज्जुं[8] वावक्रियासत[9] एवम्[10] एवैवंविदो ब्राह्मणाल्[11] लोकम् अव-क्रीणते। स यथा क्रय्य पर्यवेते क्षेत्रिणम्[12] एव क्षेत्राण्य् अपियन्त्य्[13] एवं लोकि-नम्[14] एव लोका अपियन्ति। स यद् [15]ध वा[15] अप्य् एवंविद्वान् ब्राह्मणः पूर्णां पृथिवीं प्रतिगृह्णीयाद्, एकम् एव तस्याक्षरं ज्यायः। तस्माद् उ हैवंविद्वान् ब्राह्मणो दद्याच् चैव प्रतिगृह्णीयात्॥७५॥

1 A न्नाद्य.

2 A पूर्ण.

3 C पिब्दमान. Oertel, JBR p.45, quotes this passage up to उपजीवति. See Eggeling's note on ŚBM I.8.1.7 (the only place in the Brāhmaṇas where पिब्दमान occurs), Wackernagel I §69, p. 76, Oldenberg, Rigveda Noten II,p.157.

4 The word देवयुग is not found in any other Brāhmaṇa. MW gives its earliest usage in the Mahābhārata.

5 C उपसंक्रामन्य्.

6 C अथेतनत्.

7 A B C दिक्सन्त् (क and त are confused in the Grantha script).

8 The compounds क्षेत्रपाद and क्षेत्ररज्जु are new to MW, VPK and Index Védique. पाद and रज्जु are two measures. पाद as a measure = 12 aṅgulas. MW gives रज्जु, as a measure of 8 hastas or 192 inches, from the lexicons only.

9 C वाक्रियास्ति. वा + अवक्रियासते (= अव क्रीय + आसते?). अव √क्री is not used in the other Brāhmaṇas.

10 C एवतस्माद् हैवंविदेम् for एवम्.

11 A ब्राह्मगात्, B ब्राह्मगल्, C ब्राह्मण.

12 A क्षेत्रणम्, C क्षत्रिणम्.

13 C अप-.

14 लोकिन् occurs in ŚBM XI.8.4.5.

15 A ध्वा, C द्ध्वा.

## २.७६

जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे। ते[1] तद् उ ह कुरुपञ्चालानां ब्राह्मणा अभिसमाजग्मुः[2]। स ह सहस्रं गवाम् अवरुन्धान[3] उवाच—ब्राह्मणा एता वो, यो ब्रह्मिष्ठस् स उदजताम् इति[4]। स होवाच वाजसनेयो[5], ऽर्वाचीर् एतास् सोम्येति[6]। तं [7]होचुस् त्वं नु[7] नो ब्रह्मिष्ठो [8]ऽसी३ इति[8]। स होवाच नमो वो ब्रह्मिष्ठा-यास्तु। गोकामा एव वयं स्म इति। तं होचुः को न इमं प्रक्ष्यतीति। स होवाच विदग्धश्[9] शाकल्यो ऽहम् इति। तं ह पुरस्कृत्येयुः। तं ह प्रतिख्यायायन्तम् उवाच त्वां[10] स्विच् छाकल्य ब्राह्मणा उल्मुकावक्षयणम्[11] अक्रता३ इति। स होवाच—

यदि तेनोल्मुकावक्षयणं स्मः प्रक्ष्यामो न्वै त्वाम् इति । तं ह पप्रच्छ कति देवा याज्ञवल्क्येति । स होवाच त्रयश् च त्रिंशच् च[12], त्रयश् च त्री च शता, त्रयश् च त्री च सहस्रा, यावन्तो निविदाभ्याहुता[13] इति । ओम् इति होवाच ॥७६॥

☞ §§76, 77 have been edited and translated by Oertel in JAOS XV pp.238f (referred to as Oertel in this and the next section). This story occurs in ŚBM XI.6.3 with some variations (mostly verbal). Cf. ŚBM XIV.6 1.1f, XIV.6.9.1f, BrĀrUp III.9. The manuscript variants have been recorded by Oertel, so they have been left out unless of importance.

1 C त. Oertel reads त, but our MSS testimony is in favour of ते.

2 After this ŚBM XIV.6.1.1 clarifies: तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव क स्विदेषां ब्राह्मणानामनूचानतम इति.

3 C अवरुन्धन. The parallel ŚBM XI.6.3.1 has अवरुन्धन्, the only place of its occurrence. Oertel is wrong in emending अवरुन्धान to अवरुन्धन्. अवरुन्धान occurs in KB XII.8, AB IV 16.

4 After a similar sentence ŚBM XIV.6.1.2,3 clarifies: ते ह ब्राह्मणा न दधृषुः ॥ अथ ह याज्ञवल्क्य स्वमेव ब्रह्मचारिणमुवाचैता सौम्योदज सामश्रवा३ इति । ता होदाचकार । ते ह ब्राह्मणाश्चक्रुधुः कथ नु नो ब्रह्मिष्ठो ब्रुवीतेति.

5 Hence onwards it is replaced by the synonymous याज्ञवल्क्य.

6 ŚBM XIV.6.1.3 has सौम्य. See Oertel's note 4.

7 B होतुस्तत्नु, C होचु स्वन्नु. Cf. SBM XI. 6 3.2 स्वित् for त्व नु, and ŚBM XIV.6.1.3 (quoted in note 4).

8 A B C मीति. Oertel also misses ३. ŚBM XI 6.3.2 has ३.

9 Oertel takes it as a part of the name but Eggeling (ŚBM XI.6.3.3) does better in translating it as 'shrewd', qualifying शाकल्य.

10 A B स्म.

11 उल्मुकावक्षयण here and ŚBM XI. 6. 3.3 = अगारावक्षयणम् ŚBM XIV.6.9.19. It is strange that उल्मुकावक्षयण is not noted in MW and Index Védique. All MSS here and subsequently show उन्मुका- (with *n*). Can it be a genuine form? Cf. Vedic Variants II§878 p. 411 for the interchange of *n* · *l*.

12 Oertel has misunderstood this passage. His translation should be corrected to 'who are the thirty-three, the hundred and three, the three thousand and three ' (see ŚBM XI.6.3.4). It is on account of this mistake that he adds at the end of the section कत्येव देवा इति । त्रय-स्त्रिंशदिति । ओमिति होवाच (which now delete).

13 A नुविदेभ्योहुता, B नुविदोभ्याहुता, C नुविदोभ्यहुता.

## २.७७

कत्य् एव देवा इति । त्रय इति । ओम् इति होवाच । कत्य् एव देवा इति । द्वाव् इति । ओम् इति होवाच । कत्य् एव देवा इति । एक इति । [[1]ओम् इति होवाच ।

कतमे त्रयश् च त्रिंशच् च, त्रयश् च त्री च शता, त्रयश् च त्री च सहस्रेति[1]] । महिमान एवैषां त इति होवाच । त्रयस्त्रिंशद् त्वेवेति[2] । कतमे त्रय-

त्रिंशद् इति । अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रश् चैव प्रजापतिश् च त्रय स्त्रिंशाव् इति[3] ।

कतमे[4] वसव इति । अग्निश् च पृथिवी च वायुश् चान्तरिक्षं चादित्यश् च द्यौश् च चन्द्रमाश् च नक्षत्राणि चैते वसवः[5] । एतेषु हीदं[6] सर्वं वसु[7] हितम् इति । तस्माद् वसव इति ।

कतमे रुद्रा इति । दश[8] पुरुषे प्राणा इति होवाच । आत्मैकादशः । ते यदोत्क्रामन्तो[9] यन्त्य् अथ रोदयन्ति । तस्माद् रुद्रा इति[10] ।

कतम आदित्या इति । द्वादश मासास् संवत्सर[11] इति होवाच[12] । एत आदित्याः । एते हीदं सर्वम् आददाना[13] यन्ति । तस्माद् आदित्या इति ।

कतमे त्रय इति । इम एव लोका इति ।

कतमौ द्वाव् इति । अहोरात्राव् इति ।

[14]कतम इन्द्रः, कतमः प्रजापतिर् इति । वाग् एवेन्द्रो, मनः प्रजापतिर् इति[14] ।

कतमैका देवतेति । प्राण इति । स होवाचानतिप्रश्न्यां वै मा देवताम् अत्यप्राक्षीः, पुरैतावतिथ्या[15] मर्तासि । न ते शरीराणि[16] चन गृहान् प्राप्स्यन्तीति[17] । तद् ध तथैवास । स ह तथैव ममार । तस्य हापहारिणो[18] ऽन्तरेण[19] शरीराण्य्[16] अपजह्रुर् अन्यन्[20] मन्यमानाः । तस्माद् उ ह नोपवदेत्[21] । अपि ह्य् एवंवित् परो[22] भवतीति ॥७७॥

1 Omitted in all MSS.

2 वाव = त्वेव ŚBM XI.6.3.5.

3 Cf. ŚBM XI.6.3.5, XIV.6.9.3 with prolepsis (See Oertel, Syntax of Cases in the Prose of the Brāhmaṇas, §9 Ex.14, p.14).

4 Dr. B. Ghosh, Collection of the Fragments of Lost Brāhmaṇas, Frag. XXIII, p.62-63, quotes a corresponding Śāṭyāyana passage from Veṅkaṭamādhava's introduction to RV X.19.

5 Quoted in Oertel, Syntax of Cases in the Prose of the Brāhmaṇas, §9 Ex.13, p.14.

6 Omitted by Ghosh *ibid*.

7 ŚBM XI.6.3.6 gives a different etymology. Cf. JUB IV.2.3 प्राणा वै वसवः। प्राणा हीदं सर्वं वस्वाददते.

8 दशेमे in Śāṭyāyana *ibid* and ŚBM XI.6.3.7.

9 A यदोत्क्रामत्य्, B यदोत्क्रामन्ते यन्त्य्, C यदोत्क्रामन्तो यन्त्य्. Śāṭyāyana *ibid* and ŚBM *ibid* read उत्क्रामन्ति instead of उत्क्रामन्तो यन्ति.

10 Cf. ŚBM VI.1.3.10 यदरोदीत्तस्माद्रुद्रः, IX.1.1.6 तद्यद्रुदितात् समभवंस्तस्माद्रुद्राः, XI.6.3.7 तद्यद्रोदयन्ति तस्माद्रुद्रा इति, JUB IV.2.6 प्राणा वै रुद्राः। प्राणा हीदं सर्वं रोदयन्ति.

11 Following ŚBM Oertel reads द्वादश मासास्संवत्सरस्य for द्वादश मासास्संवत्सरः against the testimony of all the MSS. Śāṭyāyana Brāhmaṇa *ibid* reads द्वादश मासाः संवत्सरः. See Oertel, The Expressions for 'The Year consists of twelve months' and the like in Vedic Prose, BSOS VIII. 685f, esp. p. 692 note 2.

12 Here ends the Śāṭyāyana fragment.

13 See note 29 on JB II.26.

14 As in ŚBM XI.6.3.8-10, this passage should precede the two previous paragraphs (कतमे त्रय इति......अहोरात्राविति), as it is connected with the enumeration of the thirty-three gods. We have retained the text as in the MSS.

15 A पुरोतावतित्थ्या, C पुरेतावनित्थ्या. Oertel wrongly emends it to पुरस् तावतित्थ्या. पुरैताव-तित्थ्या = पुरा + एतावतित्थ्या(·). Cf. ŚBM XI 6.3.11 पुरेतित्थ्यै (पुरा + इतित्थ्यै) मरिष्यसि. एतावनि-थी occurs in DŚS, Sch (MW). For *-tha* (fem. *-thī*) forms see Whitney, Sanskrit Grammar, §1242e, p.478.

16 शरीराणि is wrongly translated by Oertel as 'body'. शरीर *pl.* means 'the bones', *e.g.* in AB VII.2 (where it is correctly translated by Keith). It is confirmed by the corresponding ŚBM XI.6 3.11 न ते ऽस्थीनि चन गृहान् प्राप्स्यन्तीति

17 For the collection of bones, see Eggeling's note 3 on ŚBM XI.6 3.11 (ĀśvalGṛS IV 5.1f, KŚS XXI.3.7f, Muir's Original Sanskrit Texts V, p.316).

18 अपहारिण = परिमोषिण ŚBM. अपहारिन् has not been used in any other Brāhmaṇa. MW gives this word without any reference.

19 So emended by Oertel. MSS न्तरेण.

20 MSS अन्यम्. But ŚBM XI.6.3.11 अन्यत्. See Eggeling's note 4 on it.

21 See Eggeling, ŚBM XI.6.3.11 note 5.

22 See Eggeling, *ibid* note 6 for the various translations of परो भवति. Eggeling's rendering is better than that of Oertel.

## २.७८

ब्रह्म च ह वै सुब्रह्म चैषु लोकेष्व् आसतुर् अस्मिन् भुवने[1] । ततस्[2] सुब्रह्मोच्चक्राम । असौ वा आदित्यो[3] ब्रह्माथो वाग् एव सुब्रह्म । ते देवा इहैव वेद्या अन्तर्वेदि[4] यज्ञेन ब्रह्म पर्यगृह्णन् । तद् इदम् अप्य् एतर्हि वेद्या अन्तर्वेदि यज्ञेन ब्रह्म परिगृहीतम् ।

[5]तद् आहुर् यद् अन्या होत्रा अन्तर्वेदि कुर्वन्त्य् अथ कथं सुब्रह्मण्यो[6] बहिर्वेदि करोतीति । स ब्रूयाद् एष वेद्या आत्मा यद् उत्कर, एतत् प्रत्यक्षं ब्रह्म यत् सुब्रह्मण्या । यद् उत्करम् आस्थाय सुब्रह्मण्याम् आह्वयति तेनास्यान्तर्वेदि कृतं भवतीति ।

सुब्रह्मण्यो सुब्रह्मण्यो सुब्रह्मण्याम्[7] इति त्रिर् आह[8] । वाग् वै सुब्रह्मण्या ।[9] तद् एतां वाचं प्रथमत आरभते । अथो ब्रह्म वाग्, रस ओकारः । ताम् एतां वाचं रसेन प्रीणाति । तद् धैतद् एक ओं सुब्रह्मण्येत्य्[10] आह्वयन्ति—॥७८॥

☞ §§78-80, dealing with the subrahmaṇyā, have been edited by Oertel in JAOS XVIII, pp. 35f. For the subrahmaṇyā see SB I 1.1f, ŚBM III.3.4 17f, AB VI.3, TĀ I.12.3,4, LŚS I.3.1-14, ĀpŚS X.28.5, VaitXV.4, CH §49. Excepting new and important variants, others have been left out as they are already given by Oertel.

1 Gloss?

2 AB नत, C तता.

3 A B आदित्ये.

4 वेद्या अन्तर्वेदि (tautology), but बहिर्वेदि without वेद्या.

5 Cf. AB VI.3.

6 = सुब्रह्मण्या + उ.

7 ṢB I.1.8, ŚBM III.3.4.17, TĀ I.12.3, Vait XXXIV.5, LŚS I.2.20, 3.1, KŚS VII.9.20. Add JB reference in the Vedic Concordance.

8 Cf. ŚBM III.3.4.17.

9 Oertel misses the punctuation mark.

10 Not in Vedic Concordance.

## २.७९

—प्राणो हय् अग्रे ऽथ वाग् इति। तद् ध तन् न तथा। यथा मध्व् आसिच्य लाजान् आवपेत्, तद् अन्यथेव[1] स्यात्, तादृक् तत्[2]। तस्मात् सुब्रह्मण्योम् इत्य् एवाह्वयेत्।

इन्द्रागच्छेति[3]। इन्द्रम् एव तद् यज्ञ आह्वयति।

हरिव आगच्छेति[3]। हरिभ्याम् आयाहीति[4] वावैनं तद् आह। प्राणापानौ [5]वा अस्य[5] हरी।[6] तौ हीदं सर्वं हर्तारौ हरतः।[6] अथो[7] अहोरात्रौ [5]वा अस्य[5] हरी।[6] तौ हीदं सर्वं हर्तारौ हरतः।

[8]मेधातिथेर् मेषेति[3]। मेधातिथेर् ह मेषो[9] भूत्वा राजानं पपौ[10]।

[11]वृषणश्वस्य मेन[3] इति। वृषणश्वस्य ह मेना भूत्वा मघवा कुल उवास[11]।

गौरावस्कन्दिन्न्[3] इति। ततो हैव गौरो भूत्वार्णवम् अवचस्कन्द।

[12]अहल्यायै जारेति[3]। अहल्यायै ह मैत्रेय्यै जार आस[13]।

कौशिक[14] ब्राह्मण कौशिक ब्रुवाणेति[15]। यद् ध वा असुरैर् महासंग्रामं संयते तद् ध वेदान् निराचकार। तान् ह विश्वामित्राद् अधिजगे। ततो हैव कौशिक ऊचे।[6]

अथ ह वा एके कौशिक ब्राह्मण गौतम[16] ब्रुवाणेत्य्[3] आह्वयन्ति— ॥७९॥

1 =अन्यथा+इव. So A B, but Oertel and C अन्यथैव. अन्यथैव appears to be a *lectio simplicior*. Cf. RV विश्वथा, SV विश्वथा (Vedic Variants II §73, p.43).

2 For the simile see JAOS XVIII p.37 note 1, and JUB I.8.11.

3 For references see Vedic Concordance.

4 Not in Vedic Concordance. Cf. mantras beginning with हरिभ्यां याहि.

5 All MSS वास्य.

6 Oertel misses the punctuation mark.

7 C अथोथो.

8 See Indische Studien I p.38.

9 C मेषा.

10 Cf. JB III.233 (quoted in JAOS XVIII p.38), PB XV.10.10f and see Oertel, JAOS *ibid*, Eggeling, ŚBM part II, p.81 note 1.

11 The corresponding Śāṭyāyana passage, from Sāyaṇa on RV I.51.13, is quoted by Oertel. See Eggeling *ibid* note 2.

12 See Eggeling *ibid* note 3.

13 ŚBM III.3.4.18 accounts for these epithets thus: हरिव आगच्छ...अहल्यायै जारेति तद्यान्येवास्य चरणानि तैरेवैनमेतत् प्रमुमोदयिषति.

14 See Eggeling, ŚBM part II, p.82 note 1.

15 Not in Vedic Concordance.

16 See Eggeling *ibid* note 2. Also compare the previous view.

## २.८०

—तद् उ ह वा आरुणिनैव[1] यशस्विनोपज्ञातम्[2]। तस्माद् उ तस्याशां नेयात्।

तस्मात् कौशिक ब्राह्मण कौशिक ब्रुवाणेत्य् एवाह्वयेत् ।

देवा ब्रह्माण आगच्छतागच्छतेति[3] देवांश् चैव तद् ब्रह्माणश्[4] च समामन्त्रयन्ते । ते हास्मै समामन्त्रितास् सुमतिम् इच्छन्ते ।[5] तस्माद् उ ह समामन्त्र्य [6]मापराध्नुयान्, नेन् मोपवदान् इति[6] ।

तद् आहुः—किंछन्दस् सुब्रह्मण्येति । त्रिष्टुब् इति ब्रूयात् । ऐन्द्री हि त्रिष्टुब् इति ।

तद् आहुः—किंदेवत्या सुब्रह्मण्येति । ऐन्द्रीति ब्रूयात् ।[5] इन्द्रं ह्य् एनयाह्वयतीति । अथो ह ब्रूयाद् वैश्वदेवीति ।[5] विश्वान् ह्य् एनया देवान् आह्वयतीति ।

तद् आहुर्—यद् अन्या होत्रा स्तोत्रवत्यश् शस्त्रवत्यो ऽथ क्व सुब्रह्मण्यायै स्तोत्रं क्व शस्त्रम् इति । स ब्रूयाद् एतस्याम् एवैतत् सर्वं यद् ऋक् साम यजुः । तेनास्य सुब्रह्मण्या स्तोत्रवती शस्त्रवती भवतीति ।

तद् आहुः—किम् इव स्वित् सुब्रह्मण्यर्ग् इव स्वी३त् सामवा३ उताहो[7] यजुर् इवा३ इति । स ब्रूयान् नैवर्ङ् न यजुर् न साम । सर्वम् इवैव । सर्वम् इव ह्य् एव ब्रह्मेति ।

[8]अथ यां क्रीते राजनि सुब्रह्मण्याम् आह्वयति याम् एतां दक्षिणासु नीयमानासूत्करे तिष्ठन् सुब्रह्मण्याम् आह्वयति सैवेयम् । अथो यत् प्रायणं[9] तद् उदयनम् असद् इति । अथो आगत एवेन्द्रस्, तं मा निर्वोचामेति । एषा ह वै धेनुः पञ्चवत्सा पञ्चपदा[10] । [11]यद् ध वा[11] इदम् आहुः पांक्ताः पशव इत्य् एतद् ध तत्[12] ।

[13]तां ह वा एके यथादेवताम्[14] आह्वयन्ति । सर्वाग्नेयीम् अग्निष्टुत. ऐन्द्रीम् इन्द्रस्तोमस्य, वैश्वदेवीं वैश्वदेवस्य, अनिरुक्ताम् अनिरुक्तस्य । [15]तद् उ ह शश्वन् न तथा । नो हि ब्रह्मणो व्यापादो[16] ऽस्ति ।[5] यथानिपातितम्[16] एवाह्वयेद्[15] यथानिपतितम् एवाह्वयेत् ॥८०॥[17]

1 According to both ŚBM and ŚBK it was devised by Āruni. ŚBM makes it optional, but as to this nothing is said in the Kānva recension (Eggeling).

2 Oertel takes यशस्विन् as a part of the name. It will be better to translate it as an adj. 'illustrious, celebrated'. Cf. ŚBM III.3.4.19 where the word आरुणि occurs without any adjective or noun in apposition.

3 See Eggeling, ŚBM part II, p. 82 note 4.

4 All our MSS ब्राह्मणांश्, but ब्रह्माणः in the formula.

5 Oertel misses the stop.

6 A मापरध्नुयान्नेमेन्मोपवदानीनि, C मुपारध्नुयान्नेतिन्मोपवदानि. Correct Oertel's text and translation.

7 So all our and Oertel's MSS. Oertel's emendation उतो ह is unnecessary.

8 See Oertel, Syntax of Cases in the Prose of the Brāhmaṇas, §60 Ex. 50 p. 207, and §62 Ex. 25 p. 284.

9 C प्राणत्. Correct Oertel's text. This sentence sums up the previous statement 'so that the commencement (viz. the calling of the subrahmanyā when King Soma has been bought) and the end (viz. the calling of the subrahmanyā when the sacrificial gifts are being led) may be the

same', in order not to drive away Indra, who hath already come.

10 C पञ्चपादा. Correct Oertel's text. Cf. AB VI.3.

11 C यध्वा.

12 This sentence is to be corrected in Oertel's text. Oertel misconstrues एतच्च तत् with the next one. Cf. B. Ghosh, Fragments of the Lost Brāhmaṇas, p.90.

13 Ghosh *ibid* gives a similar Śāṭyāyana passage from the Upagranthasūtra VIII.2.

14 C -देवतम्. Ghosh *ibid* -दैवतम्, Oertel (without v.l.) -देवतम्

15 Oertel translates it as · 'That is probably not so. For there is no end of the *brahman*. As upon something indestructible he should call upon it'. I think it is better to translate it as : 'That is not always so. There is no end of the *brahman*. (So) he should call (the subrahmanyā) according to the occasion'.

16 न्यापाद 'end', and यथानिपतितम् are new to MW, VPK and Index Védique.

17 *Colophon* A B हरि: ॐ श्रीगुरुभ्यो नमः, C हरि. ॐ शुभमस्तु ॐ.

  